4

।। श्री :।।

त्रिपाठिपण्डितोमादत्तशास्त्रिकृता

# कूटपद्यव्याख्या.

इयं च

श्रीकृष्णदासात्मजेन *गङ्गाविष्णुना*

शकाब्दाः 1821, संवत् 1956.

कल्याण– मुंबई.

॥ श्रीः ॥

त्रिपाठिपण्डितोमादत्तशास्त्रिकृता

# कूटपद्यव्याख्या.

इयं च

श्रीकृष्णदासात्मजेन गङ्गाविष्णुना

स्वकीये "लक्ष्मीवेङ्कटेश्वर" मुद्रणागारे

मुद्रयित्वा प्रकाशिता.

शकाब्दाः १८२१, संवत् १९५६.

कल्याण–मुंबई.

॥ श्रीः ॥

त्रिपाठिपण्डितोमादत्तशास्त्रिकृता

# कूटपद्यव्याख्या.



इयं च

श्रीकृष्णदासात्मजेन गङ्गाविष्णुना

स्वकीये " लक्ष्मीवेङ्कटेश्वर " मुद्रणागारे

मुद्रयित्वा प्रकाशिता.

शकाब्दाः १८२१, संवत् १९५६.

**कल्याण–मुंबई.**

# प्रस्तावना.

सम्पूर्ण विद्यानुरागियोंको विदित होवे कि इस "कूटपद्य-व्याख्या" नामक ग्रन्थके प्रकट होनेका कारण यह है कि फर्रुखाबादाख्यनगरनिवासि वैयाकरणमुकुटालङ्कार त्रिपाठि पण्डितोमादत्तजीशास्त्रीसे देशदेशान्तरोंमें अन्य पण्डितोंने व राजा लोगोंने जिन २ कूटपद्योंका अर्थ पूंछा था उन २ श्लोकों कीव्याख्या शृंगार, वेदान्तादि अनेक प्रकारसे उक्त पंडित जी करते हुए तथा किसी २ श्लोककी व्याख्या निज इच्छासेभी करते हुए. उन्ही महानुभाव स्वर्गवासी श्री पं. वरजीके ज्येष्ठ पुत्र पंडित ब्रह्मदत्तने निजजनकराचित श्लोक व्याख्याओंको एकत्रितकर पूर्वोक्त नामसे प्रकाशित किया. और इसके अन्तमें उक्त पं. जीके रचित श्लोकभी स्थापित हैं।

इसके अतिरिक्त उक्त महाशयजीकृत धर्मप्रबोधिनी व पं. यज्ञदत्तकृत याज्ञीव्याख्या व पं. नरसिंहदत्तकृत नारसिंही व्याख्याभी अत्यन्त परिश्रमसे संग्रह कर शामिल किया है. उसीको पंडित नीलकंठ द्वारकाप्रसाद पुस्तकालयाध्यक्ष अमीनाबाद लखनऊने प्राप्त कर सम्पूर्ण विद्वज्जन सज्जन महाशयोंके अवलोकनार्थ श्रीयुत सेठ श्रीकृष्णदासात्मज गंगाविष्णु "लक्ष्मीवेंकटेश्वराध्यक्ष"को छापनेका अधिकार दिया. अत एव सिवाय उक्त यंत्राधिपतिकी आज्ञाविना किसीको छाप-

नेका अधिकार नहीं हैं । सर्व साधारण तथा विद्वज्जनोंको ग्रन्थ प्राप्त करनेमें सुगमता रहेगी । क्योंकि " विद्वनेवहि जानाति विद्वज्जनपरिश्रमम् । न हि वन्ध्या विजानाति गुर्वी प्रसववेदनाम्" इत्यादि वचनोंसे विद्वान् लोगोंका श्रम विद्वानही भली भांति जान सक्ता है किन्तु मूर्ख नहीं. अतएव विवेकी पुरुषोंको स्वीकृत करनेमें कटिबद्ध होना चाहिये विशेष क्या लिखें जिसके देखनेहीसे बहुत हर्ष व लाभ प्राप्त होगा । किमधिकम् ।

---

मिती मार्गशीर्ष वदी ११
भौम संवत्. १९५६.

सज्जनोंका कृपाकांक्षी.
पंडित नीलकंठद्वारकाप्रसाद,
पुस्तकालयाध्यक्ष.
अमीनाबाद–लखनऊ. २८।११।९९.

॥ श्रीरामोविजयतेतराम् ॥

अथ

# कूटपद्यव्याख्या.

वासना वासुदेवस्य वासितं भुवनत्रयम् ।
सर्वभूतनिवासीनांवासुदेव नमोऽस्तु ते ॥ १ ॥

नत्वा गुरुपदाम्भोजमुमादत्ताख्यकः सुधीः । वासनेत्यादिपद्यस्य व्याख्यामारभते धिया ॥१॥ स्वभावगुणवैषम्यान्नहीयं सर्वतोषकृत् । अतःस्वचित्तशान्त्यर्थं करोमि न हि सर्वतः॥२॥ यथा सहेते पितरौ कारुण्याद्बालचेष्टितम् । तथास्मत्साहसं सन्तः सहन्तु गतमत्सराः ॥ ३ ॥ इह खलु परमकारुणिको द्वैपायनो व्यासः शमदमादिविवेकसाधनरहितानां कलिमलग्रस्तचित्तानां जनानामैकान्तिकश्रेयःसाधनं सकलशास्त्रसम्मतं भगवन्नामसंकीर्त्तनरूपं विष्णुसहस्रनामस्तोत्रं भीष्मधर्मराजसंवादद्वारा श्रीमन्महाभारतीयदानधर्मेषु निबबन्ध । तन्माहात्म्यनिरूपणावसरे च वासना वासुदेवस्य वासितं भुवनत्रयम् । सर्वभूतनिवासीनां वासुदेव नमोऽस्तु ते ॥ इति प्रोवाच । तस्यार्थो यथाश्रुतपदयोजनया वैपरीत्येन प्रतिभातीति यथामति पदसंयोजनयार्थः प्रदर्श्यते । हे वासुदेव ईनां कामानां वासनाः

स्य नाशयस्येति दैवादिकान्तकर्मार्थसोधातोर्लोटि रूपम् । कास्ता वासनाः याभिर्भुवनत्रयं वासितम् । किम्भूतं भुवनत्रयं सर्वभूतनिवासि । यद्यपि वासनावासितत्वं भुवनत्रयस्थजनाना-मेव सम्भवति तथापि मंचाः क्रोशन्तीतिवद्भुवनत्रयशब्दोत्र भुवनस्थजनसमूहपर इति बोध्यम् । तथा च सर्वभूतनिवासी-त्यत्र सर्वेषु भूतात्मकेषु देहादिषु निवसितुं शीलमस्येत्यर्थे सुप्यजाताविति णिनिः । ननु मम वासनानाशने का शक्तिरिति चेत्तर्ह्येतमेव दोषं परिहर्त्तुं हेतुगर्भार्थयुतं वासुदेवेत्युक्तम् । तदर्थ-स्तु ब्रह्मादिस्तम्बपर्यन्तेषु जीवसमूहेषु वसतीति वासुः बाहुल-कादौणादिक उण् । दीव्यति मायया क्रीडति द्योतते वेति देवः वासुश्चासौ देवः वासुदेवः तत्सम्बुद्धौ हे वासुदेवेति । एवं चान्त-र्यामिरूपतया स्थितस्य प्रकाशकस्य च तव वासनाहरणे न कोपि प्रयास इति सूचितम् । ननु भवत्वेवं तथापि, प्रयोजन-मनुद्दिश्य मन्दोपि न प्रवर्त्तते । इति न्यायादनेकजन्मसंचितानां जीववासनानां हरणे मम किं प्रयोजनमिति चेदत्त आह वासु-देव नमोस्तु त इति । अर्थस्तु वसुदेवस्यापत्यं पुमान् वासुदेव-स्तत्सम्बुद्धौ हे वासुदेव ते नमोस्त्विति अयं भावः । यतस्त्वम-खण्डितैश्वर्यः केवलानुभवानन्दस्वरूप एव भक्तवात्सल्यात्स्व-योगमायावैभवं दर्शयितुं वसुदेवापत्यत्वं स्वीकृतवानतो भक्त-रक्षार्थं ता नाशय एतेन परमकारुणिकस्य तव स्वभक्तत्राणे

प्रयोजनरहिता स्वाभाविकी प्रवृत्तिरिति सूचितमत एवोक्तं भगवता, ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् । प्रतिजानीहि मां पार्थ न मे भक्तः प्रणश्यति ॥ अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ न कर्हिचिन्मत्पराः शान्ति रूपे नंक्ष्यन्ति नो निमिषो लेढि हेतिः । येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टमित्यादि । किंच सत्वन्न चेद्धातरिदं निजं भवेदित्यादि श्रीमद्भागवतप्रामाण्याद्भक्तोद्धारणमेव तवावतारप्रयोजनमिति स्पष्टमेव गम्यते । एवं स्थिते दर्पाहङ्कारादियुक्तानां हिंसाविहाराणां निष्किञ्चनेष्वपि त्वद्भक्तेषु पापदृष्टीनां सततं स्वावितारं सकृन्नमनमात्रेणाभिमतफलदातारमात्मस्थमपि त्वामभजतां भवत्वधःपात इष्टापत्तेस्तदुक्तं भगवता, येत्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् । सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥ आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिमित्यादि । एतेन सम्बुद्ध्यन्तवासुदेवपदस्य पौनरुक्तदोषोपि निरस्तः अर्थभेदात् । नन्विदानीन्तना वैष्णवास्तु वहवो वेषमात्रधारिणो दम्भाहङ्कारक्रोधमात्सर्यादियुक्ता वाह्यचिह्नधारिणामेव मुक्तिर्भवतीत्यभिमानेन वयमेव भक्ता इति वदन्तः सर्वभूतस्थमीश्वरं कामलोभाद्यभिभूतेन चेतसा हिंसन्तः स्वसम्प्रदायरहितान्

र्षिणप्रदेशकमलोदरातिकोमलकालियमौलिरत्ननिकररंजितातिकामतप्तगोपांगनास्तनकुंकुमरूषितगौतमवधूनिषादकिरातादिपापिवृन्दतारकदण्डकारण्यकण्टकविद्धपादतलमञ्जुलांगुलीनखमणिचन्द्रिकानिरस्तभक्तजनहृदयान्धकारसकललोकोज्झिताधमवृंदमौलिभूतोमादत्तजीवनचरणकमलभूरिपुण्यवदर्पिततुलसिकामोदलुब्धसनकादिमुनिगणस्तुतगुणनिकरकण्ठासक्तवनमालब्रह्मादिस्तम्बपर्य्यन्तजीवसमूहसेवितपादपीठाणिमाद्यष्टविधैश्वर्य्ययुतसास्मितकृपावलोकसंसूचितभूरिभक्तानुग्रहसजलनीरदेन्द्रमणिसदृशं भगवत्स्वरूपं ध्यायतामानन्दनिर्वृतचेतसान्निर्वाणपदमपि सुखाय न कल्प्यते सार्वभौमयक्षकिन्नरगन्धर्वेन्द्रादिविषयसुखं सुखाय भवतीति किं वक्तव्यम् । अथवा भगवत्कृपाबललब्धैः शमदमादिभिः समचेतसां निर्वैराणां सर्वभूतदयापराणां समाधिनिर्धूतकल्मषाणामात्मसंयमयोगपराणां देहाद्युपाधिरहितात्मदर्शिनां चित्तस्थैर्यावस्थायां यत्सुखं लभ्यते तदिन्द्रादीनामपि दिव्यस्रगनुलेपनोर्वश्याद्यधरामृतसेविनां वर्णनेपि दुर्घटं विविधकपटयुक्त्योपायैः परहिंसया चोपार्जितैर्धनैः शश्वन्मृत्युनाघ्रातैः स्त्रीपुत्रस्वजनबंधुवर्गागारविचित्रवसनाभूषणस्रक्चन्दनताम्बूलसरसभोजनपानादिभिः केवलमसुतर्पकाणां शिश्नोदरप्रधानानां तत्सुखं भवतीति किमुत वक्तव्यम् । तदुक्तम्, भगवत उरुविक्रमांघ्रिशाखानखमणिच-

न्द्रिकया निरस्ततापे । हृदि कथमुपसीदतां पुनः स प्रभवति चन्द्र इवोदितेर्कतापः ॥ भुक्त्या पुमान् जातविराग ऐन्द्रियात् दृष्टश्रुतात्मद्रचनानुचिन्तया । चित्तस्य यत्तो ग्रहणे योगयुक्तो यतिष्यते ऋजुभिर्योगमार्गैः ॥ मय्यर्पितात्मनः सभ्य निरपेक्षस्य सर्वतः । मयात्मना सुखं यत्स्यात्कुतः स्याद्विषयात्मनाम् ॥ निष्किञ्चनस्य दान्तस्य शान्तस्य समचेतसः । मया सन्तुष्टमनसः सर्वाः सुखमया दिशः ॥ तस्माद्भगवद्भक्तस्य दैवीसम्पत्कत्वं स्वभावसिद्धमिति बोध्यम् । ननु तत्तद्वैष्णवोपासनाग्रंथेषु भगवद्भक्तिसम्बधिबाह्यचिह्नानामपि भगवत्प्राप्तिहेतुत्वदर्शनात्कथं तद्युक्तानामासुरीसम्पत्कत्वं युक्तमिति चेत्सत्यम् । मनोनिग्रहाभावे बाह्येन्द्रियनियमनवदन्तर्भक्तिरहितस्य बाह्यचिह्नानामकिञ्चित्करत्वात् । आन्तःकर्णिकी भक्तिस्तु, समः शत्रौ च मित्रे च तथा मानापमानयोः । तुल्यनिंदास्तुतिर्मौनी सन्तुष्टो येन केनचित् ॥ अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः । इत्यादि भगवद्गीता द्वादशाध्यायोक्ता । तथा, यो मां पश्यति सर्वत्र सर्वञ्च मयि पश्यति । तस्याहन्न प्रणश्यामि स च मे न प्रणश्यति ॥ कृपालुरकृतद्रोहस्तितिक्षुः सर्वदेहिनाम् । सत्यसारोनवद्यात्मा समः सर्वोपकारकः ॥ कामैरहतधीर्दान्तो मृदुः शुचिरकिञ्चनः । अनीहो मितभुक् शान्तः स्थिरो मच्छरणो मुनिः ॥ अप्रमत्तो गभीरात्मा धृतिमान् जितषड्गु-

क्षमादयादियुक्तान् त्रिपुण्डादिधारिणोथ वा त्रिपुण्डादिधारणेप्याग्रहरहितान्विष्णुशिवयोरभेदज्ञानेन सर्वत्र भगवद्रूपमेव पश्यतो यथाशक्ति वर्णाश्रमधर्मपरायणान्भगवद्भक्तान्विद्विषन्तो दृश्यन्ते तेषामपि स्वरूपतो वैष्णवत्वेन भक्ताभक्तयोः को भेद इति चेच्छृणु। क्रोधमात्सर्यादियुक्तानां तु तावद्भगवद्भक्तत्वमेव नास्ति। यदाह भगवान्द्वैपायनो व्यासः, न क्रोधो न च मात्सर्य्यं न लोभो नाशुभा मतिः। भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥ इति दम्भाहङ्कारद्वेषमात्सर्ययुक्तानामप्यापाततो रमणीयानां मूढत्वं स्पष्टमेव। तदुक्तम्, अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः। मामात्मपरदेहेषु प्रद्विषन्तोभिसूयकाः ॥ तानहं द्विषतः क्रूरान्संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ अभिसंधाय यो हिंसां दम्भं मात्सर्यमेव च। संरंभी भिन्नदृग्भावं मयि कुर्यात्स तामसः ॥ ननु त्रिविधभक्तेषु तामसस्यापि भक्तत्वेन स्मरणात् कथमुच्यते। क्रोधादियुक्तस्य भक्तत्वमेव नेति चेत्सत्यम्। भगवन्मूर्त्तेः शुद्धसत्वात्मकत्वेन तदुपासकानामपि सात्विकत्वमेव युज्यते। यो यच्छ्रद्धः स एव स इति न्यायात् भगवद्भक्तानां राजसतामसत्वकथनन्तु ब्रह्मरुद्रयोरपि भगवन्मूर्त्यन्तरत्वेन तद्विभूतीनां पितृयक्षभूतप्रेतपिशाचादीनाञ्च भगवद्विभूतित्वेन तद्भक्तानामपि भगवद्भक्तत्वमित्याशयात्। इदन्तु दुस्सङ्गवशेन दुर्जनपथ-

प्रवर्त्तमानचलचित्तराजसतामसविषयकम् । क्वचिदत्युग्ररजस्तमःप्रकृतीनामपि सत्सङ्गबलेन भगवत्कृपया सर्वात्मनि हरौ काम-क्रोधाहङ्कारादिभिर्निमित्तैः स्थिरचित्तानां सद्यो मुक्तिदर्शनात् । यथा कामेन गोप्यः दर्पेण रावणादयः क्रोधेन शिशुपालादयः अयमभिप्रायः विषयान्तररहिता ह्येकात्मविषयिणी बुद्धिरात्यन्तिकश्रेयोमूलभूता आसुरीसम्पदमभिजातानां त्वनेकविषय-जालभ्रान्तचित्तत्वेन निर्विषये हरौ मनस्समावेशाभावात्सुख-लेशवार्त्तापि दुर्लभा । दैवीसम्पदमभिजातानां तु सत्सङ्गजनित-पूर्वाभ्यासबलेन विषयान्तरनिवृत्तचेतसां कलिमलशमनसक-लमंगलकरणहृदयाल्हादकभगवद्गुणगणवर्णनश्रवणवर्द्धितप्रेमा-नन्दाश्रुपातपुलकतनूरुहगद्गदाक्षराणां त्रैलोक्यलावण्यधाम-नलिनदलायतेक्षणमणिमयकिरीटकुण्डलद्युतिरञ्जितकेशनिकर-भ्राजत्कपोलशुकवरनासिकबिम्बाधरपल्लवराजितकुन्देन्दुवदु-ज्ज्वलद्विजपंक्तिसुभगचिबुककंबुग्रीवशोभितकौस्तुभमणिवृष-स्कन्धसकललोकपालबलाश्रयभूतकटकांगदादिभूषितपीनाय-तचतुर्बाहुधृतशंखचक्रगदापद्मश्रीवत्सचिह्नितवक्षस्थलभ्राजि-तभृगुचरणसकलाधारवल्गुपल्लवोदरत्रिवलितगम्भीरनाभिसिंह-कटिलसितदामिनीद्युतिहारिपीतवसनछंदोमयातिशयितबलवी-र्य्यबृंहितपक्षवातविद्रावितदैत्यदानववृन्दभुजगारिस्कन्धशोभि-तवरोरुनिजजनांगणभूमिघृष्टरुचिरजानुजङ्घगूढगुल्फललितपा-

णः। अमानी मानदः कल्पो मैत्रः कारुणिकः कविरित्याद्यन्त-रङ्गभक्तलक्षणकथनद्वारा तदाचरणरूपा। तदुक्तम्, देवानां गुण-लिङ्गानामानुश्रविककर्मणाम् ॥ सत्व एवैकमनसो वृत्तिः स्वाभा-विकी तु या ॥ अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसीति । एवञ्च सर्वत्रेश्वरभावेनास्वपरदृष्टेर्भगवद्भक्तस्य कथं क्वापि द्रोहो द्वेषो मत्सरभावस्तिरस्कारश्च संगच्छेत । तथा चोक्तं भागवते, नरेष्वभीक्ष्णं मद्भावं पुंसो भावयतोऽचिरात् । स्पर्द्धासूयाति-रस्काराः साहङ्कारावियन्ति हीति । को विद्वानात्मसात्कृत्वा हन्ति जन्तूनृतेऽसत इति च। तस्मादन्तर्भक्तियुक्तस्य दैवीस-म्पदभिजातस्य पूर्वोक्तभक्तलक्षणयुतस्य च बाह्यचिह्नाभावेपि वैष्णवोत्तमत्वमेव । बाह्येन्द्रियनियमनाभावे मनोनियमनवत् । अत एव । भगवतान्तरङ्गभक्तिज्ञानसाधनकथने कृपालुत्वामा-नित्वादिकथनवदूर्ध्वपुण्ड्रत्रिपुण्ड्रशंखचक्रत्रिशूलाङ्कनादयो नो-क्ताः । किञ्च ब्राह्मणादीनां स्वाभाविकधर्मनिरूपणावसरेपि शमदमादय एवोक्ता नत्वेते । किञ्च मौनानीहानिलायामादि-मन्तरा दण्डमात्रग्रहणस्य संन्यासाप्रयोजकत्ववद्धृद्वाग्वपुः-करणकभगवद्भजनमन्तरेण बाह्यचिह्नानामुपहास्यास्पदत्वमेव । अत एव, सर्वधर्मान् परित्यज्य मामेकं शरणं व्रजेत्यत्र सर्व-कालमङ्गलहेतुकश्रीरामगुणगणस्मरणपूर्वकसकलवर्णाश्रमधर्म-फलपर्यवसिताखण्डानन्दविग्रहभगवद्ध्यानधारणान्तरायभूता-

नामेव सर्वधर्माणां त्यागत्वोक्तिरभियुक्तसम्मता । अन्यथा कर्मकाण्डस्यातिदुरारोहत्वेन स्वभावत एव त्यागशीलानां सर्वविषयत्यागपूर्वकभगवद्भजनरहितानां शिश्नोदरपरायणानामपि सर्वधर्मत्यागे स्वधर्माचरणमूलकान्तःकरणशुद्ध्यभावेन भगवत्पदप्रपत्त्यभावेनाधःपातापत्तेः सर्वसाधनशास्त्राणां निराधारत्वापत्तिश्च स्यात् किञ्च बाह्यचिह्नरहितानामपि शबरीनिषादयवनवानरगृध्रप्रभृतीनां केवलप्रेममात्रेणैव भगवत्पदप्राप्तिदर्शनात् । एवं स्थिते न वयमूर्ध्वपुण्ड्रत्रिपुण्ड्रादिधारणाभावं ब्रूमः किन्तूर्ध्वपुण्ड्रत्रिपुण्ड्रादिधारणं यथासम्प्रदायं कर्त्तव्यन्तत्रैतद्धारणादेव वैष्णवत्वन्नत्वेतद्धारणादेवम्भूत आग्रहस्तु न कर्त्तव्यस्तेषां बहिरङ्गत्वात् । अत एव तत्तदुपासनाग्रन्थेषु बाह्यचिह्नानाम्परसम्बन्धबोधनमात्रत्वमेवोक्तं शिष्टैः । अपि च वैष्णवोत्तमत्वमिच्छता पुरुषेण सर्वभूतेषु क्षमादयार्जवादयस्त्ववश्यङ्कर्त्तव्यास्तेषामन्तरङ्गत्वात् । तदुक्तं नारदेन, दयया सर्वभूतेषु सन्तुष्ट्या येन केन वा । सर्वेन्द्रियोपशान्त्या च तुष्यत्याशु जनार्द्दनः ॥ इति । अत्र प्रसङ्गान्मामकाः श्लोकाः, परस्त्री मातृवद्येषां परवित्तञ्च लोष्ठवत् । येषां प्राणप्रियो रामस्तानहं नौमि सन्ततम् ॥ १ ॥ ये परार्थान्प्रकुर्वन्ति प्राणैरपि धनैरपि । वाक् सुधास्पन्दिनी येषां ते पुनन्ति जगत्त्रयम् ॥ ॥ २ ॥ येभ्यागतानीशधिया सत्कुर्वन्ति यथागमम् । तृणैर

न्नैर्जलैर्वापि ते वै भगवतः प्रियाः ॥ ३ ॥ ये पश्यन्तः परोत्कर्षान्विद्यैश्वर्य्यप्रजोद्भवान् । नन्दन्ति पितृवत्तेषामाशु तुष्यति सर्वदृक् ॥ ४ ॥ ये दुःखितान्नरान् द्रष्टुमक्षमा दीनवत्सलाः । दयार्द्रचित्ताः सततं ते वै भागवतोत्तमाः ॥ ५ ॥ ये ब्राह्मणाङ्घ्र्यब्जरेणून्दम्भमानविवर्जिताः । धारयन्त्यसकृच्छीर्ष्णा ते तु विष्णुस्वरूपिणः ॥ ६ ॥ ये ब्राह्मणान् भागवतान् जनांश्च शरणैषिणः । श्रद्धयार्चन्ति हृष्यन्तस्ते वै भागवतोत्तमाः ॥ ॥ ७ ॥ क्षिपतोपि च ये विप्रान् प्रीणयन्तः सुतानिव । अर्चन्ति भगवद्दृष्ट्या ते तु विष्णोरतिप्रियाः ॥ ८ ॥ हरिं हरञ्चैकदृष्ट्या ये भजन्त्यनसूयवः । शान्ता विगतसन्देहास्ते वै भागवतोत्तमाः॥९॥ये विहायाखिलान् धर्मान् रामनामैकजीविनः । श्रद्धया तीव्रया युक्तास्ते वै भागवतोत्तमाः॥१०॥येषां मुकुन्दो भगवान् हृदयान्नापसर्पति । धृतांघ्रियुगलः प्रेम्णा ते वै भागवतोत्तमाः॥११॥ये सर्वत्र हरिं भक्त्या पश्यन्तः प्रेमनिर्भराः । गायन्त्युच्चैरुदन्तश्च ते पुनन्त्यखिलान् जनान् ॥ १२ ॥ ये तु सर्वजनत्यक्तं मादृशं पतितं जनम् । विलोकयन्ति कृपया ते तु धन्याः कलौ युगे॥१३॥राम रामेति सततं येषां वाचि प्रवर्त्तते अपि चाण्डालजातीयास्तानहं नौमि सादरम्॥१४॥ये गुणानेव पश्यन्ति दोषदृष्टिन्न कुर्वते । द्विषत्स्वपि च ते धन्याः सन्तः साधुविभूषणाः॥१५॥ इत्यादि । तस्माद्दम्भमात्सर्यादिदोषरहितस्यैव

वैष्णवत्वामिति बहूक्तम्भागवतादिग्रंथेष्विति दिक्। प्रकृतमनुसरामः। अथवा वासयति निवासयति सर्वजीवनिकायान् सुरनरतिर्य्यगादिशरीरेष्विति वासनः वासयत्युपसेवते निग्रहानुग्रहपरान् शत्रुमित्ररूपेण धर्माधर्मभक्तिज्ञानपरान् धर्म्मयमवरदेश्वरब्रह्मरूपेण वेति वासनः। आद्ये हेतुमण्ण्यन्ताद्वसनिवास इत्यस्माद्द्वितीये वास उपसेवायामिति चौरादिकाण्ण्यासश्रन्थइत्यादिना युजन्तण्यन्तादचू तत्सम्बुद्धौ हे वासन वासितं वासनां स्य नाशय जीवानामिति शेषः। वासितमिति भावक्तान्तम् असुभिः सर्वभूतप्राणैर्दीव्यति क्रीडतीत्यसुदेवः काल स्तत्सम्बुद्धौ हे असुदेव कालस्वरूप भुवनत्रयमव न हि सर्वत्रानुस्यूतामनादिवासनांहन्तुं शत्रुमित्रवैवस्वतान्तर्य्यामिरूपेण सर्वत्र सतो वासनरूपात्त्वदृते कश्चन समर्थोस्ति नापि कालःस्वरूपस्य तव दंष्ट्राभिराक्रान्तान् जनान् कालरूपम् त्वांविना कोप्यवितुं क्षमः त्वन्तु स्वभक्तान्तर्हृदि निविष्टो भूत्वा ज्ञानभास्करप्रकाशेनाज्ञानान्धकारनिवर्त्तनेन वासनानिर्म्मूलनपूर्व्वकमृत्युसंसारानिवर्त्तक इति प्रसिद्धमेव। सर्वभूतेषु निवसितुं शीलमस्येति सर्वभूतनिवासी स चासाविनः सर्वभूतनिवासीनः तत्सम्बुद्धौ हे सर्वभूतनिवासीन सकलजीवनिकायान्तर्य्यामिसूर्य्यान्तर्वर्त्तिनारायण अम्बायाः यशोदायाः देवक्या वासून् प्राणान् दीव्यति हर्षयतीत्यम्बासुदेवः अन्तर्भावितण्यर्थोयम्। यद्वाऽम्वां सुष्ठु

दीव्यतिस्तौतीत्यर्थकः तत्सम्बोधने हे अम्बासुदेव ते तुभ्यं नमः अव्याहतैश्वर्य्यत्वेपि भक्ताधीनतया स्वभक्तस्तुतिपरं परमकारुणिकं त्वां विना कं नमस्कुर्य्यामिति फलितोऽर्थः। यद्वा वासयति आच्छादयति माययास्वरूपमिति वासनः। तदुक्तम्, नाहं प्रकाशः सर्वस्य योगमायासमावृतः। मूढो यन्नाभिजानाति लोको मामजमव्ययमिति। असुदेवस्येति तु कर्त्तरि षष्ठी तथाचायमर्थः। हे वासन स्वयोगमायाप्रभावेण सच्चिदानन्दघनस्वरूपाच्छादक असुदेवेन प्राणद्योतकेनात्मना त्वयैव वासितं व्याप्तं भुवनत्रयमव रक्ष[1] यद्वा वासितं रज्जौ भुजंगवदारोपितं भुवनत्रयमव सदसद्विवेचनद्वारा वस्तुत्वेनाववोधय उपाधिविनिर्मुक्तं केवलानुभवानन्दात्मप्रकाशेन जहीति वा। अवतेर्हिंसावबोधनार्थकस्येदं कथंभूतं भुवनत्रयं सर्वभूतनिवासि इनस्य सूर्यस्याम्बा इनाम्बाऽदितिस्तस्या असून् वामनाद्यवतारेण हर्षयतीतिनाम्बासुदेवः तत्सम्बोधने हे इनाम्बासुदेव ते तुभ्यं नमोस्त्विति अयम्भावः। यद्यपि त्वं कालवशान्नष्टस्य भक्तिसांख्ययोगमार्गस्य प्रदर्शनद्वारा दुरगमात्मतत्वबोधनार्थमेव भक्तवात्सल्याच्छुद्धसत्त्वोर्जितानां मूर्त्तीरुररीकुरुषे तथाप्ययमेवाखण्डितैश्वर्याचिन्त्यमहिमानन्तकोटि-

---

१ पूर्वोक्तत्रैलोक्यलावण्यादिलक्षणयुतनिजस्वरूपज्ञानोपायदर्शनेनेत्यर्थः सर्वोत्कृष्टतया त्वत्स्वरूपज्ञानाभावेन त्वत्पदप्रेमाभावेन रक्षणासम्भवात्।

ब्रह्माण्डाश्रयभूतो हरिरिति धृतात्मभिरपि त्वत्कृपावलोकं विना ज्ञातुमशक्यत्वादेतद्भजनेनैव सर्वसुखप्राप्तिर्भविष्यतीति विश्वासाभावेन वैकुण्ठलोकसुखात्मसुखप्राप्तिर्दुर्लभैव प्रतिभाति । किञ्च कृतावतारस्य तव भक्ताधीनपरतया गोपिकापीठकाद्यानयनयशोदातर्जनताडनोलूखलबन्धनादिसहनगोचारणगोपपदसंवाहनगोपिकास्तवनपाण्डवदौत्यसख्यसारथ्यभृत्यत्वादीनि नीचवत् पितृमातृगुरुचरणसेवनानुदिनब्राह्मणानुसरणसुतवन्निषादालिङ्गनशबरीफलभक्षणगृध्रपिण्डदानऋक्षवानरादिसखित्वसमुद्रसेतुबन्धनादीनि च कर्माणि मूढानां ह्यसम्भावनामूलानि संरोहयन्ति अतस्त्वमेव कृपाकटाक्षावलोकेन मायापिहितदृष्टीनां स्वानुभवानन्दस्वरूपप्राप्त्युपायं दर्शयेति । तदुक्तम् दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ इति । भागवतेऽपि, जय जय जह्यजामजित दोषगृभीतगुणामित्यादि तत्रैव श्रीधरस्वामिभिरपि, जय जयाजित जह्यगजङ्गमावृतिमजामुपनीतमृषागुणाम्।न हि भवन्तमृते प्रभवन्त्यमी निगमगीतगुणार्णवता न वा " इति स्पष्टमुक्तम् । ननु मामेव ये प्रपद्यन्ते इत्यादिनोपायोपि सन्दर्शित एवेति चेत्सत्यं तथापि विषयान्तररहिता भवत्प्रपत्तिस्तु त्वदधीनैवेति बहु प्रपञ्चितम् । किञ्चास्तांतावत्स्वानुभवानन्दप्राप्तिस्त्वत्कृपाधीनैवेतिसत्कीर्त्तिजयोत्तमभोगरूपमैन्द्रियकसुखमपि =

दनुकूलैरेव लभ्यते नतु विमुखैः अत एव क्षीरोदमन्थने समानप्रयासानामपि देवासुराणां देवैरेवामृतं पीतं नत्वसुरैः अत एव च भारतसंग्रामे अल्पसाधनैरपि पाण्डवैर्महत्तमानुग्रहपूर्वकसत्कीर्त्तिविजयसौभाग्यादयो लब्धाः नतु भगवद्विमुखैर्बहुतैररपि दुर्योधनादिभिः किन्तु प्रत्युत गरदानलाक्षागृहदाहद्रौपदीकचस्पर्शादिभिः क्षतायुष्कैस्तैर्महत्तमापराधमूलकदुष्कीर्त्तिपराजयापमानसन्तापादय एव लब्धाः परन्तु अत्युत्तमभोग एव भगवत्कृपापर्यवसानमिति तु न भ्रमितव्यम् । भगवत्प्राप्त्यन्तरायभूतत्वादत एव भगवत्कृपया सर्वोत्कृष्टमैश्वर्यं प्राप्नुवाद्भिरपि प्रह्लादध्रुवाम्बरीषविभीषणादिभिर्विषयसुखस्य निरयतुल्यत्वप्रतिपादनं कृतमिति सन्तो विभावयन्तु । यद्वाऽसुदेवस्य जीवस्येना तत्सम्बधिना कामेन वासितमाच्छादितं भुवनत्रयमव । अस्मिन्पक्षे वासनां करोतीति वासनयतीति वासा तेन वासनेति तृतीयान्तमिनेत्यस्य विशेषणम् तत्करोति तदाचष्ट इति णिच् इष्टवद्भावेन टिलोपः । तदुक्तं भगवता, धूमेनाव्रियते वह्निर्यथादर्शो मलेन च । यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ इति । सर्वभूतनिवासीति पूर्ववदेव विशेषणम् । पुनः किम्भूतं भुवनत्रयम् अकारवर्णवाच्यवासुदेवरूपमिति यावत् । अत्र च तत्वमसीत्यादिश्रुतयो, ममैवांशो जीवलोके जीवभूतः सनातनः इत्यादि स्मृतिश्च प्रमाणम् । ननु यदि मद्रूप एव जीवस्तर्हि को विशेषो

येनाहं रक्षकः सतु रक्ष्य इति चेदत आह वासुदेवेति। अर्थस्तु वसुदेवशब्दवाच्ये शुद्धसत्वे आविर्भवतीति वासुदेवस्तत्सम्बुद्धौ हे वासुदेवेति। यतस्त्वं नित्यमुक्तशुद्धस्वरूपोस्यतो बद्धस्य कामाच्छादितस्वरूपस्य जीवस्य रक्षणे समर्थोऽसि सतु स्वस्यापि रक्षणे न समर्थो मायापिहितदृष्टित्वादिति भावः। विशुद्धसत्वस्य वसुदेवशब्दवाच्यत्वे तु सत्वं विशुद्धं वसुदेवशब्दितमित्यादि श्रीमद्भागवतीयरुद्रोक्तमेव मानमित्यलमतिविस्तरेणेति शिवम्। इत्थं श्रीहरिपादाब्जमकरन्दरसार्थिना । कृता हरिहराभेदज्ञानामृतपरिप्लुता ॥ वासनेत्यादिपद्यस्य व्याख्योमादत्तशर्मणा। प्रीत्यै भूयात्सतां श्रीमद्रामपादार्पिता सती ॥ १ ॥

यं वक्त्रं मुकुरा इवेन्द्रियमनोमायाः पराग्दृश्यतां निन्युस्तत्स्थविमादिनापि च विराट्सूत्रेशभावं गतम्। तं प्रत्यग्दृशदृश्यमक्षरमणुं त्यक्तोपनेत्रत्रयाः श्रीगोपालमुपास्महे श्रुतिशिरोवंशीरवैर्दर्शितम् ॥ २ ॥

अथ महाभारतं व्याचिख्यासुः कविस्तदनुरूपप्रतिभार्थमभिवादात्मकमङ्गलमाचरन् सकलशक्तिप्रवर्त्तकं श्रीकृष्णमाश्रयति। यं वक्त्रमित्यादिना। तं श्रीगोपालं वयमुपास्मह इति संबन्धः। तं कं यमिन्द्रियमनोमायाः मुकुरा वक्त्रमिव परा-

ग्दृश्यतां निन्युः परमन्यमश्चतीति पराक् भिन्नः पदार्थस्त-द्रूपेण दृश्यतां नयन्ति स्मेत्यर्थः । अयं भावः । यथा मुकुराः स्वगतैर्नैर्मल्यमलिनत्वाल्पत्वमहत्त्ववक्रत्वऋजुत्वादिकैर्दोषैर्ब-हुधा मुखं प्रत्याययन्ति एवमिन्द्रियादयोऽपि एकं द्रष्टारं सच्चि-दानन्दसन्दोहमपि परमात्मानं स्वगतदोषैरेवानेकत्वदृश्यत्वा-दिधर्म्मकं प्रत्याययन्तीति । किंभूतं तत्स्थविमादिना विराट्-सूत्रेशभावं गतं तच्छब्देनेन्द्रियादिपरामर्शः । स्थविमशब्देन सर्वांशात्मककैवल्यं गृह्यते । आदिपदेन सूक्ष्मत्वकारणपरि-णामौ । एवं च तेषामिन्द्रियादीनां स्थविम्ना स्थौल्येन परम-महत्त्वेन विराड्भावं गतं तेषां सौक्ष्मेण सूत्रात्मतां गतं तेषां कारणात्मपरिणामेन चेशभावं गतमित्यर्थः । पुनः किंभूतं प्रत्यग्दृगदृश्यं प्रत्यश्चन्तीति प्रत्यश्चो जीवास्तेषां दृग्भिरदृ-श्यम् । यद्वान्तर्य्यामितया प्रत्यङ् परमात्मा पश्यतीति दृक् द्रष्टा कर्त्तरि क्विप् । न दृश्यत इत्यदृश्यस्तं च तं च तं चेत्यर्थः। यद्वा । प्रत्यश्चमात्मानं पश्यतीति प्रत्यग्दृक् स चासावदृश्य-स्तमिति इदं फलितार्थकथनम् । विग्रहस्तु प्रतीचो दृगित्येव । पुनः किंभूतमक्षरं न क्षरतीत्यक्षरस्तन्नाशरहितमित्यर्थः । पुनः किम्भूतमणुं सूक्ष्ममिव प्रतीयमानं नतु सूक्ष्मस्थूलमनणु-मित्यादिश्रुतिविरोधात् । यद्वा । जीवरूपत्वादणुं " सूक्ष्माणा-मप्यहं जीव " इति भगवदुक्तेः । पुनः किम्भूतं श्रुतिशिरो-

वंशीरवैर्दर्शितं श्रुतिशिरांसि उपनिषद एव वंशीरवास्तैर्दर्शितं बोधितमित्यर्थः । अनेन स एवायमित्याकारिकाप्रत्यभिज्ञा सूचिता । कथंभूता वयं त्यक्तोपनेत्रत्रयाः त्यक्तं काण्डत्रयात्मकमुपनेत्रत्रयं यैस्ते अनेन शुद्धा शरणागतिः सूचिता । उपास्महे इति तु धातूनामनेकार्थकत्वादाश्रयणार्थकम् । यद्वा । त्यक्तमिन्द्रियमनोमायात्मकमुपनेत्रत्रयं यैस्त इत्यर्थः । यद्वा । त्यक्तमुपनेत्रस्थानापन्नं वेदत्रयं त्रिवर्गसाधनं शास्त्रं वा यैस्ते आलोचनात्मकेनैव चक्षु... गम्यत इति भावः । नहि स्वानुभवमन्तरेण शुष्कशास्त्रीयज्ञा... स्यात्मसाक्षात्कारे योग्यतास्तीत्येवमुक्तिः । तदुक्तं भगवता, त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुनेत्यादि ज्ञेयम् ॥ २ ॥

अथ कविः स्वचिकीर्षितस्याविच्छिन्नप्रचारार्थं वस्तुनिर्देशात्मकमङ्गलत्वेन मर्य्यादापुरुषोत्तमं श्रीरामं निर्दिशति । बाह्य इति । श्रीलक्ष्मणार्यो रामचन्द्रः जगति संसारे विजयते सर्वोत्कर्षेण वर्त्तत इति संबन्धः । किम्भूतः यस्य बाहिः प्रपञ्चात्मकमुदवासितं प्रतीतं रूपं तर्कः तर्कशास्त्रं पाति प्रतिपादनद्वारा रक्षतीत्यर्थः ।

**बाह्यः स्तेनाभिभाषी बहिरुदवसितं पाति तर्कोप्रतिष्ठो मीमांसाप्रातिहार्यं भजति गण-**

**गणं यस्य संख्याति सांख्याः । हृत्पीठे योगशुद्धे निहितमुपनिषद्वाहवृन्दैः परं मे भाग्यं श्रीलक्ष्मणार्यो जगति विजयते यस्य लेशाः शिवाद्याः ॥ ३ ॥**

कथंभूतस्तर्कः बाह्यः तर्कगोचरादात्मस्वरूपाद्बहिः प्रकाशत इति बाह्यः । पुनः किंभूतस्तर्कः स्तेनाभिभाषी स्तेन इवाभिभाषत इति। तथा यथा स्तेनश्चोरः स्वदोषगोपनार्थं मृषाभूतमपि युक्तिमद्भिर्वचोभिः सत्यवद्दर्शयति एवं तर्कोऽपि मिथ्याभूतमपि परमाण्वादि सत्यवत्प्रतिपादयतीति भावः । पुनः किंभूतो लक्ष्मणार्यः यस्य प्रातिहार्यं द्वारपालतां मीमांसाकर्मकाण्डप्रतिपादकं शास्त्रं भजति सेवते करोतीत्यर्थो वा । यथा द्वारपालो द्वार्येव तिष्ठन् स्वाम्यभिप्रेतमन्तःप्रवेशयत्यनभिप्रेतं तु निष्कासयति एवं कर्मकाण्डविषयको वेदोऽपि विविदिषा वाक्येन निष्कामकर्मपरानन्तःकरणशुद्धिसम्पादनद्वारा परमात्मस्वरूपं बोधयति। ऐहिकामुष्मिकभोगासक्तान् काम्यकर्मपरांस्तु संसारयतीति भावः । पुनः किंभूतो रामः यस्य गुणगणं सांख्यः सांख्यशास्त्रं संख्याति गणयतीत्यर्थः । पुनः किंभूतः मे मम परमुत्कृष्टं भाग्यं भजनीयं तत्वमित्यर्थः । किंभूतं योगसिद्धे हृत्पीठे निहितं धृतमित्य-

र्थः । योगिवृन्दैर्मयेति वा शेषः । वाहयन्ति प्रापयन्ति बोधयन्ति वा वाहाः उपनिषद एव वाहाः उपनिषद्वाहस्तेषां वृन्दैः प्राप्यं बोध्यमिति फलितोऽर्थः । यद्वा । उपनिषद्वाहवृन्दैर्हृत्पीठे निहितमिति समुदितमेकमेव वाक्यम् । पुनः किंभूतः शिवाद्याः देवाः यस्य लेशास्तं सर्वात्मकाखण्डितबोधैकरसः परिपूर्ण इति भावः ॥ ३ ॥

भगवानपि ता रात्रीः शरदोत्फुल्लमल्लिकाः ।
वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रितः ॥४॥

सर्वाधारं निराधारं विचित्रानन्तशक्तिकम् । सर्वश्रुतिशिरोरत्नदीपितं हरिमाश्रये ॥१॥ यदनुस्मरणान्नित्यं भान्ति ह्यर्थास्त्रयीमयाः । यदनादरतः सर्वमभ्यस्तमपि लीयते ॥२॥ तं गुरुं सततं ध्यायन् स्मरन् तदनुकम्पितम् । सर्वसाधनहीनोऽपि किञ्चित्कर्त्तुं समुद्यतः ॥ ३ ॥ तुलारामसुतो धीमान् रुक्मिणीगर्भसम्भवः । कुर्वे त्रिपाठ्युमादत्तो रामं जनकनन्दिनीम् ॥ ४ ॥ ध्यात्वा तौ हृदयाब्जे स्वे बुद्धिवृत्तिप्रवर्त्तिनौ । अध्यात्मबोधिनीं टीकां पञ्चाध्याय्यामिताक्षराम् ॥ ५ ॥ भगवानिति । भगवान् षड्विधैश्वर्यसम्पन्नः । तदुक्तम्, ऐश्वर्य्यस्य समग्रस्य वैराग्ययशसोः श्रियः। ज्ञानविज्ञानयोश्चैव षण्णां भग इतीङ्गना॥इति। यद्वा, उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम्।

तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् ॥ भवामि नचिरात्पार्थ मय्यावेशितचेतसाम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ इत्यादयः । तदा द्रष्टुः स्वरूपेऽवस्थानमिति योगसूत्रं च । एतत्सर्वं पूर्वोक्तमनुशायिनां तत्तद्देहप्रापणमेकस्याद्वितीयस्य परमात्मनो वहुधामानं योगिनां परमानन्ददानं च योगमायाश्रयणमन्तरेण न सम्भवतीत्यत आह । योगमायामुपाश्रित इति । योगार्थं तत्तत्कार्य्यसंपादनार्थं या माया अघटनघटनापटीयसी स्वकीया शक्तिः सा योगमाया तामुपाश्रितः सन् तथा रन्तुं मनश्चक्र इत्यर्थः । यद्वा । योगयुक्ता माया योगमाया तामुपाश्रित इति योगमायामुपाश्रितः । तत्र पूर्वोक्तकार्यद्वयार्थमायाश्रयणमंत्यकार्य्यार्थं तु योगाश्रयणमिति विवेकः । अर्थान्तरं तु टीकान्तरत उन्नेयमिति ॥ ४ ॥

**तदोडुराजः ककुभः करैर्मुखं प्राच्या विलिम्पन्नरुणेन शन्तमैः । स चर्षणीनामुदगाच्छुचो मृजन् प्रियः प्रियाया इव दीर्घदर्शनः ॥५॥**

तदेति । तदा उडुराजः उदगात् उडूनि नक्षत्राणि राति आदत्ते स्वतेजसेति उडुराजश्चन्द्रस्तम् अजति प्रक्षिपति तिरस्करोती-

ति उडुराजः सूर्यः स च समष्टिजीवरूपो हिरण्यगर्भात्म कस्तदा सृष्ट्युपक्रमसमये अरुणेन सह उदगात् । यद्वा । उडुभ्यो नक्षत्रेभ्यो राति ददाति स्वकीयं तेज इति उडुराः सूर्यस्तद्वत्प्रकाशमानः अजो ब्रह्मा अरुणेन रजोगुणेन उदगात् जलशायिनारायणनाभिकमलादुद्गतो बभूव । आप्राद्यावापृथिवी सूर्य आत्मा जगतस्तस्थुषश्च । हिरण्यगर्भः समवर्त्तताग्र इति श्रुतेः । किं कुर्वन्नुदगात् शन्तमैः कल्याणरूपैः करैः किरणैर्व्यापारैर्वा। प्राच्याः ककुभः प्राच्या इत्युपलक्षणमन्यासां दिशामपि। तथा च प्रागादीनां दिशां मुखं विलिम्पन् व्याप्नुवन् पुनः किंकुर्वन् चर्षणीनां जीवानां शुचो मृजन्नपनयन् कः कस्या इव दीर्घदर्शनः सततज्ञानस्वरूपः प्रियः परमात्मा प्रियायाः स्वशक्तेर्मुखं सृष्ट्युन्मुखत्वं स्वतेजसा व्याप्नुवन्निव स एव तद्रूपेणोद्बभाविति भावः । यद्वा । ओषतीति ओट् यः पूर्वं संहृतवान् स एव नदा उः शम्भुः अकारशब्दवाच्यो विष्णुः अजशब्दवाच्यो ब्रह्मा च एवमुडुराजः सन् रूपत्रयेणोदगात् किंकुर्वन् प्राच्याः ककुभः पुरोवर्त्तिन्याः स्वशक्तेर्मुखं करैस्तामसैर्भावैः कृ हिंसायामिति धातुनिष्पन्नोत्र करशब्दः। शन्तमैः सुखकरैः सात्विकैर्भावैररुणेन राजसेन च भावेन विलिम्पन् वर्धयन् सन् प्रियः प्रियाया इवेत्यादि पूर्ववत् । यद्वा । उडूनि नक्षत्राणि राति स्वामित्वेनानुगृह्णातीति उडुराः सोमः अजशब्देन

वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥ इति लक्षण-लक्षितः भगवान् अचिन्त्यानन्तशक्तियुक्तः कृष्णशब्दवाच्यः परमेश्वरः । तदुक्तं ब्रह्मवैवर्ते, कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ॥ कर्षति संसारात्स्वभक्तानात्मानं प्रती[illegible]भक्तेरपि स एवार्थो लभ्यते । रात्रीः युगसहस्रान्ताः ब्रह्मरात्रीः शरदोत्फुल्लमल्लिकाः शरैः शरतुल्यैः क्षणनिमेषादिभिः स्वावयवैर्दाति छिनत्ति द्यति खण्डयति वेति शरदः कालः । सुपीति योगविभागात्कः । तेन शरदेन सृष्ट्युद्बोधकेन कालेन उत्फुल्लाः प्रबोधिताः मल्लिकाः सुगन्धियुक्ताः अनुशायिनां जीवानां भोगाभिमुखीकृता विषयवासना यासु तादृशीः प्रभातरात्रीर्वीक्ष्य तत्तद्भोगार्थमनुशायिनां नानादेहप्रापणरूपस्वकौतुकेन रन्तुं मनश्चक्रे ऐक्षत इत्यर्थः । यद्वा । उक्तविधः परमेश्वरः रात्रीः अप्रकाशसाम्यात् अविद्यावृत्तीः शरदोत्फुल्लमल्लिकाः शरेण ज्ञानशरेण दीयते छिद्यते दायते खण्ड्यते वा शरदः । यद्वा । स्वकीयैः शरैर्दाति विध्यति जगदिति शरदः कामः । आद्ये घञर्थे कविधानमिति कः । अन्त्ये तु पूर्वोक्त एव कः । एवं च तादृशेन कामेनोत्फुल्लाः भोगापवर्गाभिमुखीकृता मल्लिकाः तद्वत् रमणीयाः एतादृशीरनेकविधा मायावृत्तीर्वीक्ष्य रन्तुं मनश्चक्रे । अनेककोटिब्रह्माण्डसंबन्धिसृष्टिस्थितिसंहार-

रूपां स्वां लीलामाविष्कर्त्तुं पर्य्यालोचितवानित्यर्थः । तथा च श्रुतिः, अजामेकां लोहितशुक्लकृष्णरूपां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोन्य इति । सोऽकामयत बहुस्यां प्रजायेयेतिच । तत्सृष्ट्वा तदेवानुप्राविशदित्यादि च । अस्मिन् पक्षे प्राथमिकः सृष्ट्युपक्रम उच्यते । यद्वा । भगवान् सर्वशक्तिनियन्ता परमेश्वरः ताः प्रसिद्धाः रात्रीः अज्ञानबाहुल्येन प्रकाशरहिताः तमिस्रेव आवरणकर्त्तॄः । अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति । अपामसोममृताबभूम तत्र रंस्यामहे दिवीत्यादि । काम्यकर्मप्रशंसापरा शरदोत्फुल्लमल्लिकाः शरदेव करणसुखावहेन प्ररोचनवाक्येन उत्फुल्लमल्लिकाः उत्फुल्लमल्लिकावदापाततो रमणीयाः । यद्वा । तादृशवाक्येनोत्फुल्लाः मल्लास्तद्वदुच्छृङ्खला जना यासु वाक्षु तादृशीर्वेदलक्षणा वाचो वीक्ष्य आभिर्वाणीभिः कदाचिदपि योगाभ्यासपरा मद्भक्ताः प्रमत्ता मा भूवन्निति हेतोः स्वभक्तेभ्यो निरतिशयानन्दं दातुं तेषां हृदि रन्तुं मनश्चक्र इत्यर्थः । तथाच श्रुतयः, अन्धन्तमः प्रविशन्ति ये अविद्यामुपासते । इति । स्वयं धीराः पण्डितंमन्यमानाः जंघन्यमानाः परियन्ति मूढाः अन्धेनैव नीयमाना यथान्धाः इति । रसं ह्येवायं लब्ध्वा आनन्दी भवतीति । स्मृतयश्च, हृद्यन्तःस्थो ह्यभद्राणि विधुनोति सुहृत्सताम् ।

च प्राणरूप आदित्यो गृह्यते । एवं च स प्रजापतिरूपः परमात्मा चन्द्रादित्यरूपेण उदगात् प्रादुरभूत् । अग्न्यादित्ययोरभेदेनाग्निरपि गृह्यते । तथा च सोमशब्देनान्नम् अग्न्यादित्यप्राणशब्दैश्चात्ता गृह्यते । एवं चाग्नीसोमात्मकं भोक्तृभोग्यरूपं सर्वं जगत् प्रादुरभवादित्यर्थः । तथा च प्रश्नोपनिषदि कात्यायनपिप्पलादसंवादे श्रुतयः, अथ कबन्धी कात्यायन उपेत्य पप्रच्छ । भगवन् कुतो ह वा इमाः प्रजाः प्रजायन्त इति । तस्मै स होवाच । प्रजाकामो वै प्रजापतिः स तपोऽतप्यत । स तपस्तप्त्वा स मिथुनमुत्पादयते । रयिं च प्राणं चेत्येतौ बहुधाः प्रजाः करिष्यत इति । आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः रयिर्वा । एतत्सर्वं यन्मूर्त्तं चामूर्त्तं च तस्मान्मूर्तिरेव रयिः । अथादित्य उदयन्यत्प्राचीं दिशं प्रविशाति तेन प्राच्यान् प्राणान् रश्मिषु सन्निधत्ते । यद्दक्षिणां यत्प्रतीचीं यदुदीचीं यदधो यदूर्ध्वं यदन्तरा दिशो यत्सर्वं प्रकाशयाति तेन सर्वान् प्राणान् रश्मिषु सन्निधत्ते । स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयत इति । यद्वा । षोडशकलात्मकत्वेन चन्द्रसादृश्याद्भारद्वाजं प्रति पिप्पलादोक्तः षोडशकलः पुरुषोऽत्र विवक्षितः । तदुक्तम्, स प्राणमसृजत । प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियम् । मनोऽन्नमन्नाद्वीर्यं तपोमन्त्राः कर्मलोकालोकेषु च नाम चेति । अतएव, भुंक्ते गुणान् षोडश षोडशात्मकः । इति पुराणप्र-

सिद्धिः। यद्वा। यदैव परमकारुणिको भगवान् सकलताप-शमनाय स्वभक्तयोगिनां हृदि रन्तुं मनः कृतवान् तदैव तेषां हृदि उडुभिः नक्षत्रसदृशैर्नखमणिभिराभूषणैर्वा राजत इति उडुराजो राकापतिरिव ध्येयस्वरूपो भगवानुदगात् उदितो बभूव। किं कुर्वन् अरुणेन प्रेम्णा शन्तमैः किरणैः कृपाक-टाक्षैः स्वरूपकान्तिपुञ्जैर्वा। प्राच्याः पुरोवर्त्तिन्याः ककुभः स्वभक्तबुद्धिवृत्तेर्मुखं प्रथमावयवं स्वमूर्त्तिलावण्यास्वादनायोप-क्रान्तामेव तामिति यावत्। विलिम्पन् आनन्दितां कुर्वन् अत एव चर्षणीनां नानाजन्मसु भ्रममाणानां जनानां सकलेन्द्रिय-वृत्तीनां वा शुचः शोकान् तज्जनितसंतापान् मृजन् सन् कस्याः क इव प्रियः प्रियाया इव दीर्घदर्शनः यथा दीर्घकालादर्शनं यस्य स एवंभूतः विदेशादागत्य पतिव्रतायाः प्रियायाः स-न्तापमपनुदति तद्वत्। अस्ति च प्रकृतेऽपि अविद्यावशात् स्व-रूपं विस्मृत्य प्रकृतिगुणासक्तस्य योषिदिव पारतन्त्र्यमापन्नस्य जीवस्य सुकृतपाकदशायां च पतिव्रतेव स्वस्वरूपभूतं परमे-श्वरं चिन्तयानस्य तत्प्रसादात्तद्दर्शनात्सकलतापनिवृत्तिसंभा-वनेति। तदुक्तम्, भगवत उरुविक्रमांघ्रिशाखा नखमणिचन्द्रि-कया निरस्ततापे। हृदि कथमुपसीदतां नः प्रभवति चन्द्र इवोदितेर्कतापः॥ इति। यद्वा तदा। भगवदनुकम्पादशायाम् उडुभिस्तत्तुल्यैरपानादिभिरिन्द्रियैर्वा राजते उडुराजः प्राणः

स उदगात् नाभिप्रदेशात् योगशास्त्रप्रसिद्धयोगिव्यापारेण उदरादिस्थानं गत इत्यर्थः । किं कुर्वन् प्राच्याः पुरोवर्तिन्याः ककुभः भूमिकाया मुखं संस्कारं विलिम्पन् जनयन् पुनः किं कुर्वन् चर्षणीनां यमनियमादिसाधनैः प्रवर्त्तमानानां शुचः ग्लानीः खेदान् वा मृजन् दूरीकुर्वन् । किमवधिपर्यन्तमित्याकाङ्क्षायामाह । प्रिय इति । दीर्घकालकृताभ्यासबलाद्दर्शनं ज्ञानं यस्य तादृशः प्रियः प्राणः प्रियाया इव वर्त्तमानायाः या सुषुम्णानाड्याः समीपमुदगादित्यर्थः । तद्द्वारेण ब्रह्मलोकं गन्तुं ब्रह्मरन्ध्रस्थितां तां नाडीमुद्गत इति भावः । तथा च श्रुतिः, शतं चैका हृदयस्य नाड्यास्तासां मूर्द्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वगन्या उत्क्रमणे भवन्तीति॥८॥

**दृष्ट्वा कुमुद्वन्तमखण्डमण्डलं रमाननाभं नवकुङ्कुमारुणम् । वनं च तत्कोमलगोभिरञ्जितं जगौ कलं वामदृशां मनोहरम् ॥ ६ ॥**

अथ भगवान्नारायणः कौ पृथिव्यां तदुपलक्षिते ब्रह्माण्डे मोदन्त इति कुमुदो जीवास्तद्वन्तं समष्टिजीवात्मकम् अखण्डमण्डलं सर्वतो व्याप्तं रमायाः स्वशक्तेराननस्य सृष्टिप्रारम्भरूपमुखस्याभा कान्तिर्यस्मिन् तम् । यद्वा । ब्रह्मणो गौरवर्णत्वात्त्रैलोक्यलक्ष्म्याश्रयत्वाच्च रमाननवदाभा कांतिर्यस्येति

अत एव नवकुंकुमारुणम् एतादृशं कमलस्थं ब्रह्माणं दृष्ट्वा तत्कोमलगोभिः कान्तिरश्मिभिः रञ्जितं व्याप्तं वनं प्रलयकालिकं जलं च दृष्ट्वा कथं त्रैलोक्यं स्रक्षामीति खिद्यन्तं ब्रह्माणं विज्ञाय कलं मधुरशब्दात्मकं वेदं जगौ तद्धृदि प्रेरितवानित्यर्थः। तथा च श्रुतिः यो ब्रह्माणं विदधाति पूर्वम् । यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणं प्रपद्य इति । कथंभूतं कलं वामदृशां मनोहरम् । वामः शोभनवक्त्रयोरिति कोशाद्वामनाः शोभना दृशो ज्ञानानि येषां ते वामदृशो निर्मलबुद्धयो द्विजातयो विद्वांसस्तेषां मनोहरं स्वस्मिन् चित्ताकर्षकं न हि वेदार्थामृतमाधुर्यविभावनचतुरा वेदादन्यत्राधिकं रमन्ते तस्यापौरुषे सत्वे न सर्वतोऽधिकमधुरत्वादिति भावः । योगपक्षे त्वयमर्थः । भगवदनुग्रहपात्रभूतो योगी समाध्यवस्थायाम् अखण्डमण्डलं तदाकारं सर्वतः परिपूर्णं कुमुद्वन्तं कुषु योगभूमिकासु मुद्वन्तम् आनन्दप्रदम् । यद्वाऽखण्डमण्डलं चन्द्रवत्तापनाशनं रमाननाभं तद्वत्प्रकाशबहुलं नवकुंकुमवत्तेजःपुञ्जाकारम् आरुणम आरुणिमतावलम्बनं हृदिस्थमात्मानं दृष्ट्वा संप्रज्ञातसमाधिपक्षे शङ्खचक्राद्युपलक्षितं त्रैलोक्यसौभगं भगवत्स्वरूपं वा दृष्ट्वा तत्कोमलतेजोरश्मिभिरञ्जितं वनं वृत्तिसमूहं च दृष्ट्वा वामदृशां शोभनज्ञानवतां योगिनां सात्विकवृत्तीनां वा मनोहरं शान्तिदं

ब्रह्मानन्दामृतद्रवावगाहनाय प्रवृत्तत्वादेवालक्षितोद्यमाः न हि स्वरूपभूतात्मानन्दप्राप्तावुद्यमापेक्षा युक्ता एवंभूता वृत्तयो यत्र कान्तः कमनीयः कृष्णशब्दवाच्यः परमात्मा तत्राजग्मुस्तदाकारा बभूवुरित्यर्थः । किंभूता जवलोलकुण्डलाः योगिकृतप्राणधारणवेगेन नाशशङ्कया लोलानि शिथिलानि कुण्डलानि तद्वदविद्याकामसंगतानि यासां तास्तथेत्यलम्[1]॥७॥

हे कमले तव पाणिसरोजे कोकणदङ्कणदङ्करभोरु । ब्रूहि किमिच्छसि पङ्कजनेत्रे कोकणदङ्कणदङ्करभोरु ॥ ८ ॥

अथ कश्चित्कविर्हे कमल इत्यादिकूटकाव्यं चकार तस्यार्थः स्फुटं न। सर्वजनाह्लादकतया प्रकाश्यते इति तदुद्योगः । हे करभोरु तव पाणिसरोजे कोकणत् कः शब्दमकरोदिति प्रश्ने को वायुरकणदित्युत्तरम् । कः प्रजापतिरुद्दिष्टः को वायुरिति शब्दित इत्यभिधानात् वायुसंयोगेनैवाकाशस्थध्वनिरुत्पद्यत इति प्रसिद्धिः। अत्र च श्लेषेण प्रश्नोत्तरदानान्मोदोत्पत्तिः यत्र हि द्वावर्थौ परस्परं मिलित्वा प्रकृतार्थं पोषयतस्तत्र मोद उत्पद्यत इति कविकुलसिद्धान्तात्। तदुक्तम्, इभः कामश्चमंत-

१ श्रीमद्भागवतीयपञ्चाध्याय्या ऽध्यात्मबोधनीव्याख्यातुः परमात्मनि गतत्वादपूर्णता गतेति ज्ञेयम् ॥

त्सारमाहुः सारस्त्यागो मोद ऐक्यश्च तस्य इत्यादि पुनश्च कमले स्थितः कः किमकणदिति प्रश्ने कः प्रजापतिः कणदम् सूक्ष्मवस्तुप्रदं मुक्तिप्रदं वा अं विष्णुमकणत् उच्चारयति स्मेत्युत्तरम् । कणोऽतिसूक्ष्मे धान्यांशे इत्यमरः । अकारो वासुदेवः स्यादित्येकाक्षरः । कमले स्थितः सृष्ट्युन्मुखो विष्णुमस्तौदिति पुराणेषु स्पष्टम् । पुनश्च हे पङ्कजनेत्रे त्वं किमिच्छसीति कयाचित्पृष्टे उत्तरमाह । हे करभोरु कोकणदं कणदमिच्छामीत्युत्तरम् । कश्च अश्च उश्च कावस्तेषां कणदं सूक्ष्मवस्तुदं कणदं मुक्तिप्रदं नारायणमिच्छामीत्यर्थः । यद्वा । हे कमल इत्यादेर्यथाश्रुतमेवार्थः । तथा हि हे कमले लक्ष्मि तव पाणिसरोजे हस्तकमले कः अङ्कविशेषः कणदं भुक्तिमुक्तिप्रदं विष्णुमकणम अकथयत् पतित्वेन सूचितवानित्यर्थः । एवं पृष्टे उत्तरमाह । मम करभः करस्य बहिः प्रदेश एव अरुः अंब विष्णुं राति ददातीत्यरुः मृगय्वादित्वात्कुः प्रत्ययः । तादृशलक्षणविशेषयुक्त इति भावः । निर्विसर्गपाठे तु सामान्ये नपुंसकम् । पुनः हे पङ्कजनेत्रे को पृथिवि त्वं किमिच्छसीति कयाचिद्देव्या पृष्टा पृथिव्याह । हे करभोरु कणदं सूक्ष्मवस्तुरूपधर्म्मप्रदं प्रजानामिति शेषः । कणदं धान्यवप्तारं तद्दातारं वा इच्छामीति अनेन धर्मिष्ठं पालकश्च विष्णवंशभूतं राजानमिच्छामीति सूचितम् । पृथिव्याः पङ्कजनेत्रत्वं तु पङ्कजान्येव नेत्राणि यस्या इति व्युत्प-

रमणीयं वा कलं ब्रह्माक्षरत्वेन मधुरध्वनितं प्रणवं जगौ व्याजहारेत्यर्थः । तदुक्तं भगवद्गीतासु, सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च । मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥ ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् । यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥ इति ॥ ६ ॥

**निशम्य गीतं तदनङ्गवर्धनं व्रजस्त्रियः कृष्णगृहीतमानसाः । आजग्मुरन्योन्यमलक्षितोद्यमाः स यत्र कान्तो जवलोलकुण्डलाः ॥७॥**

ततो व्रजस्त्रियः जीवसंघातमकब्रह्मणाश्चित्तवृत्तयः तत्पूर्वोक्तम् अनङ्गवर्द्धनं स्वाभिमतसिसृक्षावर्धनं वेदगीतं निशम्यावधार्य्य कृष्णेन कर्षकेण कामेन सर्वकर्षणसमर्थेन चेतनात्मना वा गृहीतं वशीकृतमनुगृहीतं वा मानसं वेदनसामर्थ्यं यासां तास्तथाभूताः अन्योन्यमलक्षितोद्यमाः इन्द्रियभेदेन परस्पराज्ञातविलक्षणप्रवर्त्तनशीलाः सत्यः यत्र सृष्ट्यादिकर्मणि सत्यसंकल्पस्य प्रजापतेः कान्तः कमनीयः कामस्तत्राजग्मुस्तदुन्मुखा बभूवुरित्यर्थः । यत्र कान्तः प्रवर्त्तकत्वेन स्वपतिरीश्वरस्तत्राजग्मुस्ते विधेया बभूवुरिति वा । किम्भूताः जवलोलकुण्डलाः जवेन रजोगुणवेगेन लोलानि कुण्डलानि स्वाधिष्ठानि गोलकानि लान्ति गृह्णन्तीति तथा अत्र वैदिक-

संस्कारवतीनामिन्द्रियवृत्तीनामाग्निरूपत्वेन विवक्षया गोलकानां कुण्डरूपत्वेन वर्णनं युक्तमेव । तदुक्तम् , शब्दादीन् विषयानन्ये इन्द्रियाग्निषु जुह्वति । इति । प्रजापतिसकाशात् प्रजाकर्तृकवेदश्रवणे तु व्रजस्य सुरनरादिसंघस्य स्त्रियः बुद्धिवृत्तयः अविद्यावशेन स्वरूपाज्ञानाद्बुद्धितादात्म्यभाः क्लिष्टमार्गपतिताः सर्वे प्राणिनः स्त्रीशब्देनोच्यन्त इति । व्रजस्त्रियः अज्ञानिजना वा प्रजापतिगीतमनङ्गवर्द्धनं स्वस्वाभिमतकाम्यर्थवर्द्धनं वेदं निशम्य कृष्णेनाविद्याजनितेन संस्कारेण गृहीतमानसाः वशीकृतचित्ताः प्रवृत्तिहेतुभूतानां प्रकृतीनां नानात्वादेव परस्परमालक्षितोद्यमाः सन्तः यत्र कर्मणि कान्तः स्वाभिलषितोऽर्थस्तत्राजग्मुस्तत्रैव प्रवृत्ता बभूवुः । किम्भूताः जवलोलकुण्डलाः जवेन कालवेगेन लोलानि चञ्चलानि कुण्डलानि बाह्यशोभोपकरणानि यासां ताः सार्थवेदाध्ययनपरा अपि स्वस्वप्रकृत्यनुकूलतया वेदतात्पर्यग्रहेण धर्मार्थकाममोक्षपरा बभूवुरिति भावः । योगपक्षे त्वयमर्थः । व्रजस्त्रियः योगिन इन्द्रियवृत्तयः अनङ्गस्य कामस्य वर्धनं छेदनम् । यद्वा । दिव्यो ह्यमूर्त्तः पुरुष इत्यादि श्रुतेः । अनङ्गस्याशरीरस्य परमात्मनस्तज्ज्ञानस्य वर्धनमविद्यानिरसनद्वारा संपादकम् । तत् प्रणवगीतं निशम्यावधार्य्य कृष्णेनानन्दरूपेणात्मना गृहीतमानसाः वशीकृतशक्तयः परस्परमलक्षितोद्यमा

नेत्राणि यस्य स त्रयोदशगुः द्वे हरेरष्ट ब्रह्मणस्त्रीणि शिवस्येति त्रयोदशनेत्रत्वम् । गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोःस्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि ॥ नृस्त्रियोस्स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु । इति कोशाद्गोशब्दस्य नेत्रवाचित्वम् । गोस्त्रियोरिति ह्रस्वः । पुनः किम्भूतः यः स्वकान् भक्तान् संसारादुद्धर्त्तुमीष्टे समर्थ इत्यर्थः । तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् । भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ इत्यादि भगवद्गीतोक्तेरिति भावः । पुनः किंभूतः यः सृष्ट्यादिकरः एक एव परमेश्वरः ब्रह्मादिरूपेण जगतः सृष्ट्यादिकर्त्तेत्यर्थः । एकः परः पुरुष एव इहास्य धत्ते स्थित्यादये हरिविरञ्चिशिवेति संज्ञाः।इत्यादि भागवतोक्तेः । पुनः किम्भूतः नभःक्षितिगगः नभःक्षिती गच्छन्तीति नभःक्षितिगाः गरुडहंसवृषभाः तैर्गच्छतीति नभक्षितिगगः।अन्येष्वपि दृश्यत इत्यत्रापिशब्दस्य सर्वव्यभिचारार्थत्वाद्गमेरपिडः। यद्वा। सुपिस्थ इति सूत्रे सुपीतियोगाविभागाद्गातेर्डः अत एव खग इत्यादिप्रयोगाः संगच्छन्ते ।पुनः किंभूतः यः विश्वरूपः विश्वं रूपमस्येति विश्वरूपः सर्वरूप इत्यर्थः।सर्वजगदुपादानत्वादिति भावः।अत एव विभुर्व्यापकः विप्रशंभ्यो ड्वसंज्ञायामिति डुप्रत्ययः । पुनः किंभूतः अर्य्यादियुताष्टबाहुः अराः सन्त्यस्मिन्नित्यरि चक्रं तदादि येषां तानि अर्य्यादीन्या-

युधानि तैर्युता अष्ट बाहवो यस्य स अर्घ्यादियुताष्टबाहुः चक्रगदाशङ्खपद्मशूलपिनाकाक्षकमंडलुभूषितबाहुरित्यर्थः । तत्र चत्वारो हरेर्द्वौ हरस्य द्वौ ब्रह्मणश्चेति बाहूनामष्टत्वम् । पुनः किंभूतः यः असितश्वेतारुणाभ्रद्युतिः असितश्वेतारुणवर्णं यदभ्रं तद्वद् द्युतिः कान्तिर्यस्य सः श्वेतारुणाभ्रद्युतिः । तत्र कृष्णमेघच्छवि हरे रूपं श्वेतमेघच्छवि शम्भोः रक्तमेघच्छवि च ब्रह्मणश्चेति प्रसिद्ध्या रूपत्रयकान्तिपुञ्जविलसितो यःपरमात्मा स पुत्रादिभिर्युतं काशीपतिं रक्षतादिति वाक्यार्थः । न चास्य कूटकाव्यत्वेन दोषावहत्वमिति शङ्क्यम्। मनुष्यविषयककूटकाव्यस्यैव दोषावहत्वात् । देवविषयककूटकाव्ये तु कूटत्वं गुण एव पारोक्ष्येण देवैश्वर्यवर्णनस्य श्रुत्यनुगृहीतत्वात् । तथा च श्रुतिः । तस्मादि दन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सत्वमिन्द्रमित्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः । इति सर्वमनवद्यम् ॥ ९ ॥

सा नः पुनातु भवभूतिपवित्रमूर्तिर्गंगा कुचौ
च हृदयं च करौ च पादौ । वक्रं विलोक्य मदनानलदह्यमाना हारे हरे हिमकरे मकरे
करे च ॥ १० ॥

त्त्या पृथिव्यभिमानिदेवतायाः कामरूपत्वाद्वा यथास्थितोपमानव्युत्पत्त्या वा बोध्यम्। अत्र चंद्रमणिस्त्वेवमाह। एकस्मिन्नवसरे स्वर्गलोकसभायां ब्रह्माणं प्रति देवैरुक्तं भगवन् वेदान् श्रोतुमिच्छया वयमुपसन्नास्तद्विधेहि कृपयेति वचः श्रुत्वा ब्रह्मविदान्प्रोवाच। तत्र शिवलोकतो महेश्वरोप्यागतः। अथ च विष्णुरप्यागतः सर्वे कैलासवासिनोप्यागतास्ततपश्चात्सभासमाप्तौ सर्वैर्देवैः स्वगृहे गमनं कृतम्। तदनन्तरं शिवेन विष्णुना च गमनं कृतमित्याशयं विचार्य श्लोकार्थः स्फोटयते। पार्वतीं प्रति देवपत्न्य ऊचुः। अथ च लक्ष्मीं प्रत्यपि हे कमले हे करभोरु पाणिसरोजे कोर्थः देवसमूहे कः अकणत् नाम शब्दमकरोत् इति तव कणदं शब्ददं प्रति त्वं ब्रूहि। कथंभूतं कणदम् अमुं नाम विष्णुं पार्वतीविषयकप्रश्ने तु हे पङ्कजनेत्रे करभोरु पाणिसरोजे नाम देवसमूहे कः अकणत् इति त्वमपि तव कणदं शब्ददं प्रति ब्रूहि। कथंभूतं कणदम् अमुं नाम शिवम् अकारौ हरिरुद्रौ चेत्येकाक्षरः। इति वाक्यं श्रुत्वा पार्वत्या शिवं प्रति पृष्टम्। लक्ष्म्या च विष्णुं प्रति तदनन्तरं विष्णुना शिवेन चोक्तम्। कः ब्रह्मा अकणत् शब्दमकरोदित्युत्तरम्। पाणिसरोजशब्दस्य देवसमूहवाचकं त्वमनेन प्रकारेण पान्तीति पाः सुराः अणाः शब्दास्तान् कुर्वन्त्यणाश्छात्राः ते विद्यन्ते येषां ते अणिनः पण्डितः सरेण

१ चन्द्रमणिः कश्चिच्छ्रीमदुमादत्तशिष्यः ॥

वेगेन उ वितर्केण शास्त्रविचारे अजन्ति क्षिपन्ति परास्तान्प्र-
कुर्वन्ति ते सरोजाः देवेन्द्रा दिग्विजयकर्त्तारः पाश्च अणिनश्च
सरोजाश्च तेषां समाहारः पाणिसरोजं तस्मिन् पालकपण्डि-
तदेवेन्द्रसमूह इति दिक् ॥ ८ ॥

**मोमेरेडभिधस्त्रयोदशगुरुद्धर्तुं य ईष्टे स्वकान्**
**यः सृष्ट्यादिकरो नभःक्षितिगगो यो विश्व-**
**रूपो विभुः । यश्चार्यादियुताष्टबाहुरसित-**
**श्वेतारुणाभ्रद्युतिः सोयं पुत्रकलत्रपौत्रसहितं**
**काशीपतिं रक्षतात् ॥ ९ ॥**

मोमेरेडिति[1] । सः अयमन्तर्य्यामितया सर्वसाक्षितया च
सन्निकृष्टः परमेश्वरः काशीपतिं श्रीमदीश्वरीप्रसादनारायण-
सिंहाभिधं रक्षतादिति सम्बन्धः । किम्भूतः मोमेरेडभिधः ।
मा च उमा च इरा च । इरा भूवाक्सुराप्सु स्यादित्यमरः । मोमे-
राः लक्ष्मीपार्वतीसरस्वत्यस्ताः विष्णुशिवब्रह्मरूपेणेष्टे लक्ष्म्या-
दिनिष्ठस्वत्वानिरूपितस्वामित्वं भजतीति मोमेरेट् सा अभिधा
यस्येति मोमेरेडभिधः लक्ष्मीपतित्वादिरूपेण प्रसिद्धः विष्ण्वा-
दित्रिदेवसंज्ञ इत्यर्थः । अत एव त्रयोदशगुः त्रयोदशगावो

१ स्वनिर्मितश्लोकस्य व्याख्यानं करोति मोमरेडिति ॥

चन्द्रे विलोक्य विरहतापशान्त्यै अमृतमयचन्द्रसमीपे प्रसारितावितिति भावः।पुनः किं कृत्वा मकरे ग्राहे गङ्गायाः पादौ विलोक्य स्वव्यथाकारिमदनोपरि क्रोधात्केतुभूतमकराघाताय व्यापारितावितिति भावः। पुनः किं कृत्वा करे हस्ते चिन्तया स्थापितं गङ्गाया वक्त्रं विलोक्य ननु पूर्वं करौ हिमकरे विलोक्येत्युक्तत्वात्तृतीयहस्तस्य कथं सङ्गतिरिति चेन्न।करैः कुम्भाम्भोजे वरमभयवृन्दं च दधती। इत्यादिप्रामाण्येन गङ्गायाश्चतुर्हस्तात्वेन तृतीयहस्तवर्णने क्षत्यभावात्।एवं स्थिते करे चेति चकारेण चतुर्थहस्तस्यापि ग्रहणान्नहि दोषान्तरावसरः।यदि तु कामिन्याश्चतुर्हस्तात्वे रसाभास इत्याग्रहस्तदा विलोकने आनन्तर्य्यस्याविवक्षितत्वात्सुसमाधेयम्। तथा चायमर्थः। कस्मिंश्चित्क्षणे तापाधिक्ये हिमकरे करौ विलोक्य कस्मिंश्चित्समये चिन्ताधिक्ये करे वक्त्रं विलोक्येति गङ्गायाः कामरूपधारिणीत्वेन च चतुर्भुजत्वमपि ध्यानकाले सिद्ध्यतीति सर्वमनवद्यम्। अथवा भवान्या विपरीतरतिप्रदर्शनार्थकोऽयं श्लोकः। तथाहि भवभूतिपवित्रमूर्तिः सा पार्वती विपरीतसमये हारे हिमकरे मकरे करे च मुकुरस्थानापन्ने स्वीयौ कुचौ हृदयं करौ पादौ वक्त्रं च विलोक्य गङ्गेयमिति मुग्धभावात् मन्यमाना अत एव मदनानलदह्यमाना नः पुनात्विति संबन्धः। प्रथममेव मदनानलतापाद्रन्तुं प्रवृत्ता गङ्गाशङ्कया तु

रतिन उपरामादधिकतरं मदनानलदह्यमानेत्यभिप्रायः। हारादि-कुचादीनां यथासंख्यं तु नेहविवक्षितं किन्तु यथासंभवदर्शनमेवा-नेकचकारग्रहणाल्लिङ्गात्। मुकुरस्थानापन्नहारादिज्योतिषि प्रथ-मं वक्त्रस्यैव दर्शनसंभवात् करे तददर्शनासंभवाच्च। यदि तु कर शब्देन करस्थमुकुरस्यैव ग्रहणमित्युच्यते एवमपि हारे कुच-योरेव प्रतिबिम्बः चन्द्रे करयोरेव प्रतिबिम्बो नतु मुखादीना-मित्यत्रोपपत्त्यभावाद्दोषस्तदवस्थ एव तस्माद्यथोक्तमेव रमणी-यम्। केचित्तु यदा रहसि भवस्य संमुखं भवानी स्थिता भवेत् तं दृष्ट्वा च प्रथमं कामोत्पत्तिस्तदनन्तरं तद्भूषणेषु स्वप्रतिबिम्ब-दर्शनेन मुग्धभावाद्भवालिङ्गितगङ्गारूपसपत्नीकेलिशङ्कया स्वमनोरथभङ्गात्कामोद्रेकस्तदाप्ययमर्थः संभवतीति चतुर्थप्र-कारमप्याहुः। एवं यदा भवस्य संमुखं स्थिता पार्वती स्वकीयमेव हारं विलोकयेत्तदा मुकुरे प्रतिमुखस्थितपदार्थदर्शनस्य नियमात् शिवसंबद्धगङ्गाशरीरगतवस्तूनामेव पार्वत्या हारे प्रतिबिम्बित-त्वाद्गङ्गासंबध्येव कुचादिकं विलोक्य मदनानलदह्यमाना जातेति पञ्चमप्रकारकोप्यर्थः संभवति। परन्त्वस्मिन्पक्षे हारस्यैव मुकु-रस्थानापन्नत्वं हरादीनां हृदयादिषु तु शुद्धाधाराधेयभावसं-बन्धेनैवान्वयः नतु बिम्बप्रतिबिम्बत्वसंसृष्टेन। एवं च ग्राहवा-चकमकरपद एव गङ्गापदयोरन्वयादत्र पक्षे मकरस्वारस्यमपि सिद्ध्यतीत्यलं विस्तरभिया ॥ १० ॥

सो[1] नः पुनात्विति । सा गंगा नः अस्मान् पुनातु कथंभूता सा भवभूतिपवित्रमूर्तिः भवस्य भूत्या ऐश्वर्येण भस्मना वा पवित्रा मूर्त्तिर्यस्याः सा तथा । तदुक्तम्, महैश्वर्य्यं लीला-जनितजगतः खण्डपरशोः।इति ।पुनः किंभूता मदनानलदह्यमाना किं कृत्वा हारे रत्नहारे कुसुमहारे वा कुचौ विलोक्य पार्वत्या इति शेषः।भवकर्तृकसंभोगसमये रन्तुमुद्यतया पार्वत्या शृङ्गारार्थं रत्नहारस्य धृतत्वात्कुसुमस्रजोप्युद्दीपकत्वेन तत्समये धारणस्यौचित्याच्चेति भावः।पुनः किं कृत्वा हरे हृदयं विलोक्य आसक्तमित्यध्याहारः । अत्र हरेत्युक्त्या रतिविशेषकौशलेन शिवस्य पार्वतीमनोहरणक्षमत्वं सूचितं तेन च शृङ्गारपोषः।पुनः किंकृत्वा हिमकरे चन्द्रे शङ्करललाटस्थे पार्वत्याः करौ विलोक्य तत्समये लज्जाभिया स्वाङ्गप्रकाशकचन्द्रकिरणाच्छादनाय पार्वत्या स्वकरौ चन्द्रोपरि व्यापारिताविति भावः । अनेन तत्समये जगन्मातुर्नवोढात्वं सूचितम्। पुनः किं कृत्वा मकरे शिवस्य मकराकृतकुंडलप्रदेशे पार्वत्याः पादौ विलोक्य संभोगकाले कामिन्याः पादौ तत्प्रदेशस्थौ भवत इति लोकप्रसिद्धिः ।न च शिव-

१ एकस्मिन्नवसरे जाह्नव्याः प्राक्तटे रामनगरे विराजमानेन सार्वभौमेन मेोमेरेडाभिध इत्यादिकूटपद्यस्य परमगूढार्थपूर्वकाशीर्वादं श्रुत्वा परमहृष्टेन श्रीमन्महाराजाधिराजश्रीमदीश्वरीप्रसादनारायणसिंहकाशीनरेशेनाखिलभूमण्डलभूषणं परमविद्वद्वरं श्रीमदुमादत्ताभिधत्रिपाठिनंप्रति एतत्कूटपद्यार्थं पृष्टे वक्ष्यमाणप्रकारेणोक्तमहाशय एवं व्याख्यातवान् ॥

स्य मकराकृतकुण्डलधारित्वमप्रसिद्धम्।तत्समये शृङ्गारमयरूपधारित्वात्।किञ्च ध्यायेन्नित्यं महेशमिति ध्यानश्लोके रत्नाकल्पोज्वलाङ्गमित्युक्तत्वेन भक्तेच्छया सर्वकालेऽपि तादृशरूपधारित्वम्।यदि भगवतो निगमागमासिद्धं तर्हि तस्मिन्समये किमसम्भावितमिति शिवस्य सर्वमयत्वात्पार्वत्यास्तथा प्रतीयत इतिवा। पुनः किं कृत्वा करे शिवकरे पार्वत्या वत्कं विलोक्य मुखे हस्तव्यापारस्तु प्रेमनिर्भरातिशयसूचनार्थः। एवं सपत्न्याः स्वपतिसंभावितां संभोगसंपदं विलोक्य स्वमात्मानं च तद्रहितं विलोक्य तज्जनितमदनानलेन दह्यमाना अत एव स्वसादृश्येन संसारदावानलदह्यमानान् भगवाद्वियोगदावानलदह्यमानान्वा नोऽस्मान्पुनात्विति पर्यवसितोऽर्थः।गङ्गायाः परमयोगित्वेन दयालुत्वेन च दयार्द्रदृष्ट्युक्तत्वात्।तदुक्तम्, आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन।सुखं वायदि वा दुःखं स योगी परमो मतः॥ इति। अथार्थान्तरं प्रदर्श्यते। सा भवस्य भूतिः पवित्रमूर्तिः नः अस्मान्पुनात्विति सम्बन्धः।किम्भूता मदनानलदह्यमाना गौर्य्यनुरोधेन स्वेनाभुक्ताया गङ्गायाः कामव्यथादर्शननिमित्तकृपाजनितमदनानलेन दह्यमाना किं कृत्वा गङ्गाकुचौ हारे विलोक्य हारसंबंधेनाधिकतरलावण्ययुक्ताविति भावः।पुनः गङ्गाया हृदयं च हरे स्वस्मिन्नेवावसक्तं विलोक्य अनेन कृपायोग्यत्वं त्यागानर्हत्वं च सूचितम्।पुनः किं कृत्वा गङ्गायाः करौ हिमकरे

मुखीकृते सतीत्यर्थः । कन्दर्पमित्रस्य तव कन्दर्पसुभटभूता या ममोपेक्षा न युक्तेति भावः । यद्वायमर्थः।कन्दर्पदर्पशयने श्रीकृष्णे परिपीड्यमाने सुरतश्रमयुते सति रे मलयमारुत त्वं मन्दं मन्दम् आयाहि प्रियतमश्रममपनेतुमित्यर्थः। कनकचम्पकवनानीत्यादेरर्थः पूर्ववत् ।कथंभूते कृष्णे हारे मनोहारे ।यद्वा। वक्षसि धारयितुं हारे हारसदृशे इत्यर्थः । पुनः कथम्भूते हरे दुःखहरे इत्यर्थः ।पुनः कथम्भूते हिमकरे अतिशीतले कामसन्तापशामकत्वादिति भावः । पुनः कथंभूते मकरे मकराकृतकुण्डलयुक्ते सुरतव्यापारे ग्राहसदृशे वा।पुनः कथंभूते करे कार्यसाधके इत्यर्थः । अध्यात्मपक्षे त्वयमर्थः । हे अमलय न विद्यते मलो यस्मिन् इत्यमलं निर्मलान्तःकरणं तत् याति प्राप्नोति इत्यमलयः तत्संबुद्धौ हे अमलय परमात्मन् तथा हे मारुत मरुत्सु प्राणेषु नियामकतया प्रकाशत इति मारुतः।शैषिकोऽण्।हे जगत्प्राणान्तर्यामिन् प्राणस्य प्राण इति श्रुतेः।त्वं मन्दं मन्दं शनैः शनैरायाहि आविर्भावेन स्वोत्कर्षमाविष्कुर्वित्यर्थः । किं कुर्वन् कनकचम्पककाननानि आंदोलयन् कनकस्य प्रकाशबहुलस्य महतः चम्पककाननानि तत्सदृशानि महत्तत्वप्रकाशितान्यहङ्कारादीनि तत्वानि आन्दोलयन् उद्धर्षयन् संक्षोभयन्निवेत्यर्थः । कस्मिन् सति कन्दर्पदर्पशमने कामादिगर्वनाशके हारे हरेहरिभक्तिसम्प्रदायमार्गे तथा हरे शिवभक्तिमार्गे तथा

हिमकरे वैरिनाशनेन देवाभयप्रदे शक्तिमार्गे तथा श्रमकरे विघ्नग्राहनिवर्त्तके गणपतिमार्गे तथा करे रश्मिप्राधान्ये सौरमार्गे च परिपीडयमाने सति कलिदोषवशात्परिच्छिन्नदृशां तत्तदुपासकानां परस्परकलहेन विप्लुते सतीत्यर्थः। अतः सर्वशक्तिप्रेरकः परिपूर्णरूपस्त्वं तेषामपरिच्छिन्नदृग्दानेन कलहनिवृत्तिपूर्वकोपासनेनात्यन्तिकश्रेयः संपादयेति भावः । यद्वा। हारे इत्यस्यैव हरादीनि विशेषणानि। तथा हि हरेः परमात्मनः विष्णोरयं हारः शैषिकोऽण्। हरिभक्तिमार्गः तस्मिन् कलिदोषवशात्परिपीडयमाने सतीत्यर्थः । किंभूते हरे सकलदुःखहरे पुनः किंभूते हिमकरे तापत्रयनिवर्त्तकत्वाच्चन्द्रवच्छीतले पुनः किंभूते करे समस्तकार्य्यसाधके इत्यर्थः एवं च त्वदाविर्भावेन सूर्योदये तिमिरततिवदविद्यान्धकारनिवृत्या त्वद्भक्त्यानायासेन श्रेयःप्राप्तिरिति भावः। अस्मिन्पक्षेऽपरिच्छिन्नोपासनैव गृह्यते। सकलदेवतोपासनानामत्रान्तर्भावादिति बोध्यम् ॥ १२ ॥

मोदः साद्यन्तदारः कलयति विकलो व्यस्तकम्पूर्वधाराच्चुञ्चुःपायादपूर्वाद्विधुमधुकरतो दम्पतीशं पहास्तम्। योह्वायापात्स्वमालं तु विहितविभवं मध्यतश्चावधीन्नाम्पूतोक्तां बालभावात्स दिशतु भवतो भावुकं कंबुकण्ठः ॥ १३ ॥

**यान्यद्येत्यनुयुञ्जानं शेचे साचीकृतेक्षणा ।**
**प्राणनाथ प्रसीदामि यत्तेऽप्राप्तिरयत्नतः ॥११॥**

अद्याहं यानीत्यनुयुञ्जानं पृच्छन्तं प्रियं साचीकृतेक्षणा तिर्य्यक्कृतेक्षणा काचित्स्त्री शेचे ऊचे इति संबन्धः।किमूचे इत्यपेक्षायामाह प्राणेति । हे प्राणनाथ ते तव संबन्ध्यपां प्राप्तिर्यतोऽयत्नत एव भवेदतोऽहं प्रसीदामीत्यर्थः।त्वयि गतेवश्यं मृताया मम त्वद्धस्तदत्ततिलोदकप्राप्तावयत्न एवाभीष्टसिद्धेरितिभावः। एतच्चाप्प्राप्तिरित्यनेन ध्वन्यते।प्राणनाथ इत्यनेन तु प्राणनाथस्य तव गमने मम प्राणानामनुगमनं युक्तमेवेति ध्वनिः । साचीकृतेक्षणेत्यनेन तु प्राणनाथस्यैतदनुचितमिति सूचितम् ।यदन्ते या मतिः सा गतिरिति न्यायात् त्वत्प्राप्तिरेव भवेदिति सम्बन्धः। मम चित्तवृत्तेस्त्वद्गतत्वादिति भावः।अन्यत्समानम् यद्वा । खण्डितताया इयमुक्तिः हे प्राणनाथ प्राणोपसन्तापक दुःखहेतोस्त्वत्प्राप्तेरभावोऽयत्नत एव भवेदतोऽहं प्रसीदामीत्यर्थः।अन्यस्त्रीसंभोगाचिह्नितस्य प्रियस्य दर्शनं दुःखहेतुरिति प्रसिद्धमेव । खण्डितानाम् अत्र च बीजं प्राणनाथेत्येव।पदम् यद्वा । परकीयाया इयमुक्तिः । अस्मिन् पक्षे हे प्राणनाथ कार्य्यान्तरव्यग्रस्यापि तवैवं प्रष्टुं याऽयत्नतः प्राप्तिरतोऽहं प्रसीदामि अन्ततस्तु त्वयि गते सति मत्सुखहेतुभूता त्वदप्राप्तिरयत्नत एव भवेदिति प्रसादहेतुरकारप्रश्लिष्टतेऽप्राप्तिरित्यनेन ध्वन्यते। प्राणनाथ इत्य-

नेन तु एवंभूतोऽनभिज्ञो मम पतिःसदा भूयादिति नाथतेराशीरर्थकग्रहणेन ध्वनितम् । परकीया हि अन्यदभिप्रायेणैवान्यत्कथयतीति प्रसिद्धिः ॥ ११ ॥

**आयाहि रे मलयमारुत मन्दमन्दमांदोलयन्कनकचंपककाननानि।कन्दर्पदर्पशयने परिपीड्यमाने हारे हरे हिमकरे मकरे करे च१२॥**

आयाहीति । कस्याश्चिन्नायिकाया इयमुक्तिः । तथाहि हे कन्दर्पदर्प कन्दर्पं दर्पयतीति प्रोत्साहयतीति कन्दर्पदर्पस्तत्संबुद्धौ । तथा हे कन्दर्पसाहाय्यकारिन् मलयमारुत त्वं आयाहि रतिश्रममपोहितुमिति भावः । किं कुर्वन् सन् कनकचम्पकवनानि तत्तुल्यानि युवतिजननिकराणि आन्दोलयन् तत्सुखमुत्पादयन्नित्यर्थः । यद्वा । प्रसिद्धान्येव कनकवर्णानि चंपकवनानि आंदोलयन् कम्पयन्नित्यर्थः । कस्मिन् सति शयने शय्यायां हारे परिपीड्यमाने संमर्दिते सति तथा हिमकरे हिमकरसदृशे मुखे परिपीड्यमाने श्रमवारियुतत्वात्परिम्लाने सतीत्यर्थः।यद्वा। नायककर्तृकचुम्बनादिना आलेडिते सतीत्यर्थः । तथा मकरे मकराकृतकुण्डले परिपीड्यमाने सुरतव्यापारेण इतस्ततः प्रचालिते सतीत्यर्थः । यद्वा । मकरे ग्राहसदृशे माने खण्डिते सतीत्यर्थः।तथा करे हस्ते परिपीड्यमाने स्वव्यापारनिवारणेन वि-

ढुकामः सन्नाजगाम । तत्र ये द्विजेन्द्रा मिलितास्तानवलोक्य स्तुतिमकरोत्सत्यासक्तमनाइति पद्येन तद्द्वयमपि स्तुतिं कुर्म इति संबन्धः। कथम्भूतो नलः श्रीमन्तश्च ते निखिलभूपालास्तेषां मौलीनां मस्तकानां मालासु मिलन् मुकुटानां तटेषु नटन्त्यो या मणिमरीचयस्तासां मञ्जरीपुञ्जैः पिञ्जरितं पीतीकृतं पादाम्बुजं यस्य सः।पुनः किंभूतः प्रचण्डभुजदण्डाभ्यां पूर्वमाकलितः आकृष्टः पश्चात्कुण्डलितो यः कोदण्डस्तेन हिण्डयमानाः प्रेर्यमाणाः ये प्रकाण्डा बाणास्तेषां काण्डैः समूहैः खण्डितानि यान्यरिमुण्डानि तैर्मण्डितमशेषभूमण्डलं येन सः। पुनः किम्भूतः सकलाश्च ता दिग्विलासिन्यः कारिण्यो दिग्देवता वा तासां कर्णेषु पूरीकृतः कीर्तिलतापल्लवो येन सः । पुनः किम्भूतः दिगिभानां दिग्गजानां ये कर्णतालास्तेषामास्फालनेन चालनेन नर्त्तितः प्रतापानलो येन सः । पुनः किम्भूतः दिव्यनाराचानां पुञ्जो यस्य सः। पुनः किंभूतः निगमस्य पन्था मार्गस्तस्मिन्पर परायणः इत्यर्थः। स एव परः श्रेष्ठो यस्येति वा । पुनः किम्भूतः पुण्यश्लोकानां पुण्यकीर्तीनां राज्ञामग्रे गण्यः गणनीयः ।पुनः किम्भूतः श्रीमतां राज्ञामधिराजः सकलभूमण्डलं शास्तीत्यर्थः । स च तत्र मिलितान् द्विजेन्द्रान् कथमस्तौदित्याकांक्षायां श्लोकार्थः स्फोटयते । अयं भवतां संघः समूहः कृष्णेन रुद्रेण वा साम्यं प्रयाति । विप्रा गावश्च

यज्ञाश्च ऋतवश्च हरेस्तनूः।इति भागवतोक्तेः। ब्राह्मणैर्पूजितैर्नित्यं पूजितोऽहं न संशयः।इति भारतात्।ब्राह्मणो मामकी तनुः।इति स्वयं भगवतोक्तेश्च विष्णुसादृश्यं ब्राह्मणेषु प्रतीयते।वेदः शिवः शिवो वेदो वेदाध्यायी सदाशिवः। पाषाणः शिवतां याति कथं विप्रः शिवो न हि॥ इत्यभियुक्तोक्तेः। यैर्ब्राह्मणैः स्थापितः पाषाणो शिवरूपतां भजति तेषां ब्राह्मणानां शिवरूपत्वं सुतरां सिद्धम्। किञ्च विष्णुशिवयोरभेदाध्यवसायस्य सकलसम्मतत्वेन विष्णुसादृश्यबोधकानि यानि वाक्यानि तान्येव शिवसादृश्यबोधकानि वाक्यानीति निरवद्यम् । ब्राह्मणानां विष्णुसादृश्यबोधकानि तु वाक्यानि निगमागमपुराणेषु सहस्रशो दृश्यन्ते इति दिदृक्षुणा तत एवावगन्तव्यानि तस्माद्युक्तमुक्तं नलेन। भवतां ब्राह्मणानां संघः कृष्णेन रुद्रेण वा साम्यं प्रयातीति।ननु वचनप्रामाण्यादेव हरिहरसादृश्यं ब्राह्मणेषु प्रतिपद्यते किंवा तत्प्रतिपादकः कश्चन धर्म्मोपीत्याकांक्षायां श्लेषयुक्तैर्विशेषणवाचकैः पदैः सादृश्यसंसाधकः साधारणधर्म्मो निरूप्यते। कीदृशः कृष्णः सत्यासक्तमनाः सत्यायां सत्यभामायाम् आसक्तं मनो यस्य सः सत्यासक्तमनाः। विनापि प्रत्ययं पूर्वोत्तरपदलोपो वक्तव्य इति भाष्योक्तवार्तिकेन भामापदस्य लोपः। यथा भीमः भीमसेन इत्यत्र। कीदृशो रुद्रः सत्यासक्तमनाः सत्यां दक्षकन्यायामासक्तं मनो यस्य सः सत्यासक्तमनाः यद्यपि

स मोदः भवतः भावुकं कल्याणं दिशतु ददातु किम्भूतो मोदः साद्यन्तदारः आद्यन्ताभ्यां दाररूपाभ्यामवयवाभ्यां सहितः दामोदर इत्यर्थः। पुनः किम्भूतः यो विकलो विविधकलायुक्तः कलयति प्रकाशयति लोकमिति शेषः । पुनः किम्भूतो व्यस्तकम्पूर्वधाराचुञ्चुः व्यस्तकं वैपरीत्यं यथा भवति तथा पूर्वं धारया वित्तः प्रसिद्ध इति पूर्वधाराचुञ्चुः तेन वित्त इति चुञ्चुप्प्रत्ययः । पूर्वभागे राधापदयुक्त इति कलितोर्थः । सः कः यः विधुमधुकरतो विगतो धुर्यस्मात्तादृशान्मधुकरतो नाम मकरतो ग्राहात् किम्भूतात् अपूर्वात् पायादपायान्नाशहेतोरित्यर्थः । दम्पतीशं गजगजीपतिं गजराजमह्नाय शीघ्रमपात् किम्भूतं दम्पतीशं पहास्तं पाति रक्षतीति पस्तमुद्दिश्य हास्तं शुण्डादण्डं यस्य तम् । तु पुनः यः स्वमालं भक्तमारकं विहितविभवं विगतविभगं ग्राहं बालभावाद्वात्सल्यान्मध्यतोऽवधीत् किं कृत्वा नाम्पूतोक्तां गिरमाकर्ण्येति शेषः।नमनं नाम् तेन पूतः पवित्रः इति नाम्पूतो गजराजस्तेनोक्ताम् । पुनः किम्भूतः सः कम्बुकण्ठः कम्बुवत्त्रिरेखः कण्ठो यस्य सः ॥ १३ ॥

## गद्यम् ।

एकस्मिन्नवसरे श्रीमन्निखिलभूपालमौलिमालामिलन्मुकुटतटनटन्मणिमरीचिमञ्जरी-

पुञ्जपिञ्जरितपादाम्बुजः प्रचण्डभुजदण्डा-
कलितकुण्डलितकोदण्डहिण्डयमानप्रका-
ण्डकाण्डखण्डितारिमुण्डमण्डिताशेषभूम-
ण्डलः सकलदिग्विलासिनीकर्णपूरीकृत-
कीर्त्तिलतापल्लवो दिगिभकर्णतालास्फालन-
नर्त्तितप्रतापानलो दिव्यनाराचपुञ्जो निग-
मपथपरः पुण्यश्लोकाग्रगण्यश्रीमद्राजाधि-
राजो नलो नाम राजा दमयन्तीमुद्वोढुकामः
सन्नाजगाम । तत्र ये द्विजेन्द्रा मिलितास्ता-
नवलोक्य स्तुतिमकरोत्सत्यासक्तमना इति
पद्येन॥तथा च पद्यम्॥सत्यासक्तमनाः प्रवृ-
द्धनरकच्छेदी द्विजेन्द्राश्रयो यश्चानेकमुखो-
द्भवास्पदमलं श्रीर्यत्र संराजते । यो गंगां च
बिभर्त्ति यश्च स शिवो यः कामदेहाश्रयःसङ्गः
साम्यमयं प्रयाति भवतां कृष्णेन रुद्रेण वा १४

एकस्मिन्नवसरे नामेति प्रसिद्धो नलो राजा दमयन्तीमुद्वो-

वेदाश्रयत्वप्रसिद्ध्या तदीश्वरे सुतरां तदाश्रयेनैवमेव सकलनिगमाधारब्राह्मणराजचन्द्राश्रयभूतरुद्रस्यापि तथात्वेन ब्राह्मणसङ्घस्य तु निसर्गादेव वेदाश्रयत्वेन सर्वेषामेक एव साधारणो धर्मः फलितः। पुनः कीदृशः कृष्णः यश्चानेकमुखोद्भवास्पदम् अनेकानि मुखानि यस्य सः अनेकमुखो ब्रह्मा तस्योद्भव उत्पत्तिस्तस्यास्पदमाश्रयो यः कृष्णः। कीदृशो रुद्रः। यश्च रुद्रः अनेकमुखस्य कार्त्तिकेयस्योत्पत्तेराश्रयः। कीदृशो भवतां संघः यः प्रपञ्चनिर्वाणसमये अनेकरूपस्य विष्णोर्मुखोपादानकोद्भवस्यास्पदमाश्रय इत्यर्थः। यद्वा। अनेकमुखो ब्रह्मा शेषो वा स [illegible]द्भव आविर्भावकारणं यस्य सः अनेकमुखोद्भवः शास्त्रकलापस्तदाश्रयभूत इत्यर्थः। अत्रापि शास्त्रान्योन्याश्रयत्वेन धर्मैक्यमूह्यम्। पुनः कीदृशः कृष्णः अलं श्रीर्यत्र संराजते। यत्र कृष्णे अलं परिपूर्णा श्रीः संराजते प्रकाशते। महेन्द्रादिष्वंशरूपेण कृष्णे तु परिपूर्णरूपेण लक्ष्मीर्नित्यं वसतीति भावः। तदुक्तं महाभारतीयदानधर्मेषु श्रिया, नारायणेष्वेकमना वसामि सर्वेण भावेन शरीरभूता। तस्मिन् हि धर्मः सुमहान्निविष्टो ब्रह्मण्यता चात्र तथा प्रियत्वम्॥ इति। कीदृशो रुद्रः अलं श्रीर्यत्र संराजते। यत्र रुद्रे अलं परिपूर्णोपमारूपा श्रीः संराजते। मोमयोरभेदाध्यवसायेन उमा लक्ष्मीरूपैवेति स्पष्टम् मन्त्रशास्त्रेषु। तदुक्तं मार्कण्डेयपुराणे, श्रीः कैटभारिहृदयैकक्-

ताधिवासा गौरी त्वमेव शशिमौलिकृतप्रातिष्ठा। इति। कीदृशो भवतां संघः अलं श्रीर्यत्र संराजते यत्र ब्राह्मणसंघे अलं सामर्थ्यविशेषरूपा श्रीः संराजते प्रत्यक्षीभूतधनधान्यादिसमृद्धयभावेऽपि स्वसामर्थ्येनैवेन्द्रादिदुर्लभमैश्वर्यं स्रष्टुं क्षमो ब्राह्मणसंघ इति भावः। अत एवेन्द्रदुर्लभमैश्वर्य्यं तपोवलेन सृष्ट्वा गाधये च्यवनर्षिणा संदर्शितमत एव विश्वामित्रस्य सृष्ट्यन्तरनिर्माणे प्रवृत्तिर्जातेत्युपाख्यायत इति। अत्र त्रिष्वपि लक्ष्म्याश्रयत्वरूपो धर्म एक एवेति स्पष्टम्। पुनः कीदृशो कृष्णः योगं गां च विभार्ति। योगः संहननोपायध्यानसंगतियुक्तिषु। इति कोशात्। तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम्। इति भगवदुक्तेश्चाऽयः रुद्रः योगं दुःखसंयोगाभावफलकं ध्यानयोगमष्टाङ्गं वा तत्प्रवर्तकं योगशास्त्रं वा बिभार्त्ति धरति गां वृषभं नन्दिनं च विभार्त्ति पालयतीत्यर्थः। शिवस्य योगशास्त्रप्रवर्तकत्वप्रसिद्धमेव। कीदृशो भवतां संघः योगं गां च विभार्त्ति योगं कर्मनैपुण्यं बन्धकानां कर्म्मणां मोक्षपरत्वसम्पादनरूपं विभार्त्ति। गां वेदलक्षणां वाणीं च विभार्त्ति। तदुक्तं भगवता, योगः कर्मसु कौशलम्।इति। अत्र कृष्णेन योगेनैव गोवर्द्धनो धृत इति योगाश्रयत्वरूपस्त्रयाणामेक एक धर्म्मः। पुनः कीदृशो कृष्णः यश्च साशिवः यः कृष्णः शिवेन सहैव वर्त्तमानो न कदाचित् वियुज्यत इत्यर्थः। अत एव, शिवस्य

गुणसङ्गरहितयोर्हरिहरयोः क्वाप्यासक्तत्वं न सम्भवति तथापि परमकारुणिकयोस्तयोर्भक्तवात्सल्येन स्वस्वरूपासक्तभक्ताधीनत्वेऽपि न क्षतिः।यो यच्छ्रद्धः स एव सः।इति न्यायेन भक्तस्य भगवद्रूपत्वेन तदारामस्य चात्मारामत्वाक्षतेः। मोमयोश्च भक्तचूडामणित्वं स्पष्टमुपासनाग्रन्थेषु। किञ्च, एकाकी न रमते स द्वितीयमैच्छत, ततश्च पतिश्च पत्नी चाभवताम्।इति श्रुतेरेकस्यैव महसः क्रीडार्थं द्विधाभवनप्रतीतेस्तयोस्तदासक्तत्वे दोषलेशगन्धोऽपि नेति सुधीभिराकलनीयम्।कीदृशो भवतां संघः सत्यासक्तमनाः सत्ये सत्यभाषणे यद्वा, सत्यं ज्ञानमनन्तं ब्रह्म इति श्रुतेः। सत्यशब्दोक्तपरब्रह्मरूपज्ञानसाधने शमदमादिधर्मे परमात्मनि वा सक्तं मनो यस्य सः सत्यासक्तमनाः।शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च।ज्ञानविज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्।।इति भगवदुक्तेः।तानि विदुर्ब्राह्मणा ये मनीषिणः। इति श्रुतेश्च।एवं च ब्राह्मणानामात्मनिष्ठत्वं स्वभावसिद्धम्।विषयलम्पटा त्वौपाधिकीति सूचितम्। तथा च, ज्ञानी त्वात्मैव मे मतम्।इति भगवदुक्तेरात्मनिष्ठस्य ब्राह्मणसंघस्य हरिहराभ्यां साधारणो धर्मः पर्य्यवसित इति ध्येयम्।पुनः कीदृशः कृष्णः प्रवृद्धनरकच्छेदी प्रकर्षेण वृद्धिं प्राप्तो यो नरकासुरस्त च्छेत्तुं शीलं यस्य सः। कीदृशो रुद्रः प्रवृद्धनरकच्छेदी प्रवृद्धनरो ब्रह्मा तस्य पञ्चमं कं मस्तकं छेत्तुं शीलमस्य सः। कीदृशो

भवतां संघः प्रवृद्धनरकच्छेदी प्रवृद्धा ये नरकाः कुंभीपाकादयः तान् छेत्तुं शीलमस्येति सः।धर्मवर्द्धनार्थमेव त्रयाणां नरकच्छेदने प्रवृत्तिरिति साधारणो धर्मः फलितः । पुनः कीदृशः द्विजेन्द्राश्रयः द्वाभ्यां जठराण्डाभ्यां जायंत इति द्विजाः पक्षिणस्तेषामिन्द्रो द्विजेन्द्रो गरुडः स आश्रयो यस्य स द्विजेन्द्राश्रयो गरुडवाहन इत्यर्थः । कीदृशो रुद्रः द्विजेन्द्राश्रयः द्वाभ्यां जन्मसंस्काराभ्यां जायन्ते इति द्विजा ब्राह्मणास्तेषामिन्द्रो द्विजेन्द्रश्चन्द्रः।द्विजराजः शशिधरो नक्षत्रेशःक्षपाकरः।इति कोशात्। सोमोऽस्माकं ब्राह्मणाना ँ राजा । इति श्रुतेश्च । तस्याश्रयो द्विजेन्द्राश्रयश्चन्द्रशेखर इत्यर्थः । कीदृशो भवतां संघः द्विजेन्द्राश्रयः द्विजेन्द्रत्वस्य सत्वात्मकत्वशान्तकत्वजगदाह्लादकत्वादेराश्रयः ब्राह्मणसंघस्य सत्वप्राधान्येन चन्द्रस्यापि तथात्वेनोभयोरपि द्विजेन्द्रत्वमक्षतम् । तथा चास्मिन्पक्षे द्विजेन्द्रशब्दो भावप्रधानार्थकब्राह्मणोत्तमत्वमागत्येत्यर्थः। ब्राह्मणोत्तमत्वं तु ब्राह्मणेष्वेव सम्भवति नतु क्षत्रियादिषु विरुद्धधर्मत्वात् । यद्वा । जन्मोपनयनसंस्कारवन्तः साङ्गवेदाध्ययनप्रवृत्ता उपकुर्वाणाः द्विजाः इन्द्रः सुरपतिस्तेषामाश्रयः द्विजेन्द्राश्रयः वेदार्थपारावारीणस्य ब्राह्मणसंघस्य तदाश्रयत्वं युक्तमेवेति भावः । तदुक्तम्, जन्मना जायते शूद्रः संस्काराद्द्विज उच्यते। वेदाभ्यासाद्भवेद्विप्रो ब्रह्म जानाति ब्राह्मणः।।इति। अत्र गरुडस्य

देव सुखम् आत्मानात्मविवेकमहिम्ना सकारणस्य प्रपञ्चस्य मिथ्यात्वेन दुःखरूपतया च निश्चितत्वेन परित्यागात् । ततः स्वतः परावृत्ताया वृत्तेः परावृत्तस्य निरुद्धस्य मनसो वा यत्परमानन्दभूतब्रह्माकारतयावस्थानं तदेव निरतिशयं सुखमिति भावः । आद्ये संप्रज्ञातनामा समाधिः अन्त्ये त्वसंप्रज्ञातनामकः समाधिः सूचित इति भावः । तथा च योगसूत्रे, वितर्कविचारानन्दास्मितरूपानुगमात्संप्रज्ञातः १।१।१७। विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः १।१।१८। अर्थस्तु वितर्कः स्थूल आभोगः स च स्वरूपं साक्षात्कारवत्प्रज्ञाशब्देनोच्यते । यथा हि प्राथमिको धानुष्कः स्थूलमेव लक्ष्यं विध्यति ततः सूक्ष्मम् एवं प्राथमिको योगी स्थूलमेव भगवतश्चतुर्भुजादि ध्येयं साक्षात् करोति ततः सूक्ष्मम् । विचारशब्देन च सूक्ष्मं स्वरूपविषयकं ध्यानम् आनन्दशब्देन च तद्दर्शनजनित इन्द्रियाह्लादो गृह्यते । ग्रहीतृबुद्ध्योरभेदेनैकात्मिका संविदस्मिताशब्देनोच्यते । एतेषां स्वरूपानुगमात्संप्रज्ञातः समाधिर्भवतीति सम्यक् प्रकारेण ज्ञायते । ध्यातृध्येयादिविभागो यस्मिन्निति संप्रज्ञातः द्वितीयस्य त्वयमर्थः । विरामो वृत्तीनामभावस्तस्य यः प्रत्ययः कारणं तस्याभ्यासोऽनुष्ठानं तदेव पूर्वं यस्य तादृशः संस्कारशेषोऽसंप्रज्ञातसमाधिः । संप्रज्ञातसमाधौ तु राजसतामसवृत्तीनां निरोधेऽपि

सात्विकवृत्तेरवशिष्यमाणत्वाद्विवेकख्यातिरप्यवशिष्यते । अत्र तु सर्ववृत्तीनां विरोधाद्विवेकख्यातिरपि निरुद्ध्यत इति ज्ञातृज्ञेयज्ञानेऽपि त्रिपुट्यात्मकभेदनिरासे आनन्दमयकोशस्य लयेऽपि सामान्यानन्दभूतब्रह्माकारतयैवावस्थानमिति विशेषः । तदुक्तम्, मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः । या संप्रज्ञातनामासौ समाधिरभिधीयते ॥ इति । एवं च सुखरूपः परमात्मैवेत्यवसीयते तथा च ब्रह्मसूत्राणि । आनन्दमयोऽभ्यासात् १।१।१२। विकारशब्दान्नेति चेन्न प्राचुर्य्यात् १।१।१३ । तद्धेतुव्यपदेशाच्च १।१।१४। मांत्रवर्णिकमेव च गीयते १।१।१५। नेतरोऽनुपपत्तेः ।१।१।१६। भेदव्यपदेशाच्च १।१।१७। कामाच्च नानुमानापेक्षा १।१।१८। अस्मिन्नस्य च तद्योगं शास्ति १।१।१९। एतेषामर्थस्तु भगवता भाष्यकारेणैव प्रपञ्चित इति तत एवावगन्तव्यः । किञ्च ब्रह्मानन्दवल्ल्यामपि ब्रह्मनिष्ठस्य सर्वाधिकसुखश्रवणादयमेवार्थ उक्तस्तथा हि, सैषा आनन्दस्य मीमाꣳसा भवति, युवा स्यात् साधु युवाध्यापकः, आशिष्ठो दृढिष्ठो बलिष्ठः, तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्, स एको मानुष आनन्दः, ते ये शतं मानुषा आनन्दाः, ॥ १ ॥ स एको मनुष्यगन्धर्वाणामानन्दः, श्रोत्रियस्य चाकामहतस्य, ते ये शतं मनुष्य गन्धर्वाणामानन्दाः, स एको देवगन्धर्वाणामानन्दः, श्रोत्रियस्य चाकामहतस्य, ते ये शतं

हृदये विष्णुर्विष्णोश्च हृदये शिवः । इत्युक्तम् । कीदृशो रुद्रः यश्च सशिवः यश्च रुद्रः शिवया पार्वत्या सह वर्तमानः स-शिवः । कीदृशो भवतां संघः यश्च सशिवः शिवेन कल्याणेन सह वर्त्तमानः सशिवः शांतरूपत्वात् शिवरूपवेदाश्रयत्वाच्च । अत एव स्वप्नदृष्टस्यापि ब्राह्मणसंघस्य मङ्गलरूपत्वमुक्तं पुराणेषु किं पुनः प्रत्यक्षदृष्टस्येति । अत एव च ब्राह्मणद्वेषिणः क्वापि शिवं न भवतीति बहूक्तं भागवतादिग्रन्थेषु । अत्र शिव-मद्वैतं ब्रह्मेति परमात्मन एव शिवशब्दवाच्यत्वेन तदाश्रयत्व-रूपो धर्मशास्त्रपराणामपि तुल्य एवेति ज्ञेयम् । पुनः कीदृशः कृष्णः यः कामदेहाश्रयः यः कृष्णः कामदेहस्य प्रद्युम्नदेह-स्याश्रयः । कीदृशो रुद्रः यः कामदेहाश्रयः कामं द्यति खण्डय-तीति कामदा सा चासावीहा चेष्टा कामदेहा तस्याआश्रयः का-मनाशकचेष्टाश्रय इत्यर्थः । कीदृशो भवतां संघः यः कामदे-हाश्रयः कामान् मनोरथान् ददातीति कामदा सा चासावीहा कामदेहा तस्या आश्रयः कामदेहाश्रयः यो ब्राह्मणसंघः काम-जनकचेष्टाश्रय इत्यर्थः । अनेन कृष्णसादृश्यबोधको धर्म्मः सूचितः । यद्वा । यो भवतां संघः कामदेहायाः कामखण्ड-नचेष्टाया आश्रय इति पूर्ववदेवार्थः । अस्मिन्पक्षे रुद्रसादृश्य-साधको धर्म्मो ब्राह्मणसंघे फलितः अयमभिप्रायः । प्रसन्ना ब्राह्मणा अवितर्कितान् सुरदुर्लभानपि कामान् वितरन्ति क्रुद्धा-

स्तु पूर्वस्मादप्यैश्वर्य्याद् भ्रंशयन्तीति अत एव देवासुरसंग्राम पराजितो मृतो विष्णुनोत्पादितः ब्राह्मणानामपि क्रोधोऽनुग्रहार्थ एवेति सर्वेषामेक एव साधारणो धर्मः पर्य्यवस्यतीति सुधीभिरूह्यम् ॥ १४ ॥

**सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ।**
**एतज्ज्ञेयं समासेन लक्षणं सुखदुःखयोः ॥ १५ ॥**

इह खलु संसारे सर्वे प्राणिनः आत्मनः सुखमेव कामयन्ते दुःखं तु केपि नेति पामरपशुपक्षिपर्य्यन्तमपि प्रसिद्धिः । यतः पशुपक्ष्यादयोऽपि सुखस्थानमेव मृगयन्ते । यत्र च दुःखप्रतीतिस्ततः पलायन्ते अत्रायं विचारः । तत्किं सुखवस्तु कथं च तल्लाभः कानि च तदन्तरङ्गसाधनानीति । तत्र तावत्सर्वसाधारण्येन सुखदुःखयोर्लक्षणं भगवान्मनुराह । सर्वं परवशमिति । अस्य लौकिकोऽर्थः स्पष्ट एवेति न व्याख्यायते । वस्तुतस्त्वत्र परशब्देन, पराञ्चि खानि व्यतृणत्स्वयंभूः इत्यादिश्रुतिप्रसिद्धदेहादिर्गृह्यते । आत्मशब्देन चायमात्मा ब्रह्मेति श्रुतिप्रामाण्यात्स्वस्य परमार्थस्वरूपभूतः परमात्मा गृह्यते । तथा च यत्परवशं यत् परेषां देहेन्द्रियादीनां वशमधीनं तदधीनतया वर्त्तित्वं तद्दुःखं दुःखजनकमित्यर्थः । यच्चान्तर्मुखतया आत्मवशमात्माधीनं तदधीनतया तदाकारत्वं मनसस्त-

भित्तौ वटी । गोदा यत्र नटी तरिङ्गिततटी कल्लोलचञ्चत्पुटी दिव्यामोदकुटी भवाब्धिशकटी भूतक्रियादुःकटी ॥ १६ ॥

एषा पञ्चवटीति । हे रघूत्तम एषा प्रसिद्धा पञ्चवटी कुटी भवतु कथंभूता यत्र पञ्चा विस्तृता वटी छायास्ति । विस्तारवचनार्थकात्पचाद्यजन्तात्पञ्चेष्टाप् । वटीत्यस्य तु वटस्य सूर्यस्य स्त्री वटी छाया पुंयोगे ङीप् । वटः सूर्ये तरौ लीके इति विश्वः । पुनः कीदृशी पान्थस्य जीवस्यैकं ब्रह्मैव घटयति चेष्टयतीति तथा स्तनन्धयीतिवद् षिद्गौरोति ङीष् ।पुनः पुरस्कृतः प्रकाशवत्त्वेन स्फुरितः तट उद्धाररूप उच्छ्रायो यस्याः सा पुनः किंभूता संश्लेषभित्तौ वटी संश्लेषो विषयेन्द्रियसंयोगस्तेन या भित्तिः भित्तिरिवाज्ञानावृत्तिः तस्या वटी विभाजयित्रीत्यर्थः । भित्ताविति सप्तमी तु वृक्षे शाखावत् । यद्वा । तस्यां वटी औषधरूपेत्यर्थः । पुनः किम्भूता गोदा यत्र नटी गां वेदरूपां वाणीं ददातीति सरस्वती सा यत्र नटी नर्त्तकीव तत्स्थानस्य मुनिगणसेवितत्वादिति भावः । यद्वा । गामिन्द्रियवर्गं तदाश्रयत्वाद्विषयवर्गं वा द्यति खण्डयतीति गोदाऽध्यात्मविद्या चिच्छक्तिर्वा सा यत्र भाष्यमाणा मुनिजनैरस्ति नृत्यतीति वा । पुनः किम्भूता तरीङ्गित तटी कल्लो-

लचश्चत्पुटी भगवद्भक्तसम्बन्ध्यनेकविधोपासनाप्रकाररूपतरङ्गैर्युक्ता या तटी धाराप्रवाहवत्परम्पराप्राप्ता या भक्तिलक्षणा नदी तस्याः कल्लोलैश्चश्चदुद्गच्छन्पुटः संश्लेषः संसर्गो वा यस्याः सा । यद्वा । तस्याः कल्लोलैश्चश्चत्प्रकाशमानो यो भावस्तं पुटति संश्लिष्यतीति सा । आद्ये पिप्पल्यादित्वं कल्प्यमन्ते कर्मण्यण् ततो ङीप् णित्वेन वृद्धिस्तु न पुटेः कुटादित्वात् ।अत एव दिव्यामोदकुटी दिव्यस्यामोदस्य भगवच्चरणकमलचिन्मकरन्दपरागामोदस्याश्रयभूता वस्तुतस्तत्परागस्य मुनिजनान्तःकरणैवाश्रयत्वेऽपि आचारवान् वंश इतिवत्तस्या अपि तदाश्रयत्वे न क्षतिः। पुनः कीदृशी भवाब्धिशकटी भवाब्धेः शकटिरिव शकटी उद्धारणकर्त्रीत्यर्थः । यद्वा । भवाब्धौ शं सुखं कटति वर्षतीति । तथा पुनः किम्भूता भूतक्रियादुःकटी भूतानां जीवानां क्रियाभिः काम्यकर्मभिर्दुःप्रापा। यद्वा । भूतेति क्रियाविशेषणं भूताभिः प्रभूताभिरित्यर्थः । अथवा भूतक्रियाणां कर्मणां दुःकटी आवरणकर्त्रीत्यर्थः।कुतोऽप्यागच्छतीत्यधोरिव दुरित्यस्यानर्थकत्वान्नार्थान्तरप्रक्लृप्तिरेतेन काम्यकर्मनिरसनद्वारा मोक्षसाधकेति फलितम् । अथवा एषा पञ्चवटीत्यादेरयमर्थः । एषा पञ्चवटी कुटी कुटिला प्रतीयते। यद्वाऽस्मत्सुखविच्छेदनकर्त्री भाविसीताहरणादिति भावः। आद्ये कौटिल्यार्थकाजन्तात्कुटेर्गौरादित्वात्पिप्यलपादेराकृतिग-

देव गन्धर्वाणामानन्दाः, स एकः पितॄणां चिरलोकलोकानामानन्दः, श्रोत्रियस्य चाकामहतस्य, ते ये शतं पितॄणां चिरलोकलोकानामानन्दाः, स एक आजानजानां देवानामानन्दः, श्रोत्रियस्य चाकामहतस्य, ते ये शतमाजानजानां देवानामानन्दाः, स एक कर्मदेवानां देवानामानन्दः, ये कर्मणा देवानपियन्ति, श्रोत्रियस्य चाकामहतस्य, ते ये शतं कर्मदेवानां देवानामानन्दाः, स एको देवानामानन्दः, श्रोत्रियस्य चाकामहतस्य, ते ये शतं देवानामानन्दाः, स एकः इन्द्रस्यानन्दः, श्रोत्रियस्य चाकामहतस्य, ते ये शतमिन्द्रस्यानन्दाः, स एको बृहस्पतेरानन्दः, श्रोत्रियस्य चाकामहतस्य, ते ये शतं बृहस्पतेरानन्दाः, स एकः प्रजापतेरानन्दः, श्रोत्रियस्य चाकामहतस्य, ते ये शतं प्रजापतेरानन्दाः, स एको ब्रह्मण आनन्दः, श्रोत्रियस्य चाकामहतस्य, स यश्चायं पुरुषे यश्चासावादित्ये स एकः इत्यादि । एवं च ब्रह्मनिष्ठस्य सर्वाधिकानन्दवर्णनेन परमात्मैवानन्दावधिरिति सूचितम् । अत एव, एष एव ह्यानन्द यति, आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन, आनन्दो ब्रह्मेति व्यजानात् । इत्यादिश्रुतयः । एवं स्थिते ये तृणादिपिहितजलमुत्सृज्य रविकिरणेषु जलबुद्ध्या धावमानमृगा इव सहजसुखं विहाय बाह्येषु धनपुत्रसरसभोजनस्रक्चन्दनवनितादि भोगेषु सुखबुद्ध्या भ्रममाणा दुःखमेव

प्राप्नुवन्तीति युक्तमुत्पश्यामः । ननु सरसभोजनस्रक्चन्दनवनितादिभोगेषु प्रत्यक्षत एवानन्दस्योपलभ्यमानत्वादात्मोत्थमेव सुखमिति वचनं प्रतारणमात्रमेवेति चेन्न । स्थिरानिर्मलजलाशयेषु चन्द्रादिप्रतिबिम्बवत् स्थिरायां सात्विकवृत्तौ सुखरूपात्मप्रतिबिम्बे बाधकाभावेन अविद्यावृत्तावस्थायामपि सुकृतोपस्थापितसरसभोजनस्रक्चन्दनवनितादिप्राप्तिसमये स्थिरायां सात्विकवृत्तौ सुखरूपात्मप्रतिबिम्बेन सुखप्रतीतावपि सरसभोजनादीनां सुखरूपत्वे तज्जनकत्वे वा मानाभावात् । तदुक्तम्, काचिदन्तर्मुखावृत्तिरानन्दप्रतिबिम्बभाक् । पुण्यभोगे भोगशान्तौ निद्रारूपेण लीयते ॥ इति । एतदेवाभिप्रेत्य श्रुतावुक्तम्, एतस्यैवानन्दस्यान्ये मात्रामुपजीवन्तीति । तस्मादात्मोत्थमेव सुखमिति निर्बाधमेव । अत एव धनपुत्रदेहादिनाशसंभावनायां रजसोपप्लुते चेतसि निद्रालस्यादितमोगुणाक्रान्ते वा रोगाद्यभिभूतदशायां वा सरसभोजनस्रक्चन्दनवनितादिभोगाः किमपि न सुखयन्ति प्रत्युत दुःखाकुर्वन्ति । तस्मादिन्द्रियाधीनतया विषयसेवनं दुःखरूपमेवेति यथायथं सूक्ष्मबुद्धिभिः तत्वविद्भिरेवाकलनीयम् ॥ १९ ॥

**एषा पञ्चवटी रघूत्तम कुटी यत्रास्ति पञ्चावटी । पान्थस्यैकघटी पुरस्कृततटी संश्लेष-**

कचुरादिकुटे रूपम् । साधुत्वं तूक्तमेव । पुनः कीदृशी भवाब्धिशकटी भवाब्धेः शं सुखं स्त्रीपुरुषसंयोगरूपं कटत्यावृणोतीति तथा पचाद्यजन्तात्कटे वर्षावरणयोरित्यस्मात्पिप्पल्यादेराकृतिगणत्वान्ङीप् । इदं त्वर्थमात्रकथनं विग्रहस्तु भवाब्धिशस्य कटीति बोध्यः । अन्यथा कर्मण्यण् स्यादिति भावः । अत एव भूतक्रियादुःकटी भूताभिर्वृद्धीभिरपि क्रियाभिर्दुष्कटी दुष्प्रापा भूतानां क्रियाः गृहोपयोगिनीः दुःखेन वर्षतीति तथा पूर्ववन्ङीप् । एतेनोत्सृष्टगृहाणामेव सुखदेति परमनिष्कर्षो ध्वन्यत इत्यलमतिविस्तरेणेति शिवम् । अर्थान्तरस्तु टीकात अवगन्तव्यः ॥ १६ ॥

श्रीमत्फणीन्द्रमुद्दिश्य पञ्चवट्याः प्रवर्णने । निरूपितं यत्सूरीन्द्रमौलिभूतहनूमता ॥ १ ॥ तत्रैवार्थद्वयं कश्चिदुमादत्ताख्यकः सुधीः । कल्पयामास फणिनं नमस्कृत्य यथामति ॥ २ ॥ अदोस्मत्साहसं धीराः सहन्तु गतमत्सराः । शोधयन्तु महात्मानः शास्त्रज्ञाः कृतनिश्चयाः ॥ ३ ॥ स्वनिर्मितेन सर्वेऽपि सरसेनारसेन वा । प्रीयन्ते विरलाः केचिदन्यनिर्मितमुज्जुषः ॥ ४ ॥ स्त्रीबालभिन्नहृदयास्तत्सदृङ्मतयोऽपि वा । नास्तिका भिन्नमर्य्यादा मज्जंत्यश्मप्लवा इव ॥ ५ ॥ ये चात्मानामिमं देहं मत्वा भिन्नदृशः शठाः । अनात्मचिन्तया तप्तास्ते मुह्यन्ति शुचार्दिताः ॥ ६ ॥ ये मूर्खकृतसम्पर्का येप्यध-

र्मरतानुगाः । गुरोर्हरेश्च विमुखास्ते शोच्याः सततं नृणाम् ॥ ७ ॥ येऽलीकभाषणान्नैव शङ्कन्ते धर्मभीरवः । अनादृत्य स्वान्तरंगं तेभ्यः कः पापकृत्तमः ॥ ८ ॥ यो मायाकापटिकैर्वचोभी रञ्जयन्मनः । न त्यजत्यनृतं सत्सु स सर्पेभ्योऽपि वक्रगः ॥ ९ ॥ ये दाम्भिका दम्भयज्ञैः पशून् घ्नन्त्यसुतर्पकाः । कदर्य्या निर्दयास्ते तु श्वसन्तो मृतसन्निभाः ॥ १० ॥ ये दुर्लभं मानुषत्वं प्राप्यात्मज्ञानवर्जिताः । नता हरिपदाम्भोजनिरतास्ते श्वसन्मृताः ॥ ११ ॥ ये त्वनित्येन देहेन साधयन्ति हितं नृणाम् । भगवद्भावनायुक्तास्तेषां जन्म वरं नृषु ॥ १२ ॥ यदर्थयन्सज्जनोऽपि किं मया दुष्कृतं कृतम् । इत्येव विस्मयाविष्टो लज्जतेऽनर्थकृद्यथा ॥ १३ ॥ यद् गृहीत्वां च संयान्ति महान्तोऽपि विधेयताम् । किं पुनर्गृहिणो दीनाः कामाकुलितचेतसः ॥ १४ ॥ यत्त्यक्त्वा मनसा दूरात्सर्वेषामात्मभूतताम् । प्राप्नवन्तो हरेर्यान्ति विष्णोः पदमनुत्तमम् ॥ १५ ॥ तदेकं हि मनो मूढ सर्वश्रेयोविघातकम् । वित्तचिन्तनमुत्सृज्य किं न स्मरसि राघवम् ॥ १६ ॥ एतदेव हि संप्रोक्तं हितं वाजसनेयिभिः। ईशावास्यमिदꣳसर्वं यत् किंचेत्यादिवाक्यतः ॥ १७ ॥ अहो विचित्रं जगतो विचेष्टितं आहारनिद्राभयमैथुनादिभिः । स्वयं समाजामनु यद्ववादिभिस्तथापि श्रेष्ठां स्वमतिं प्रचक्षते ॥ १८॥ मयापि बहुशो भ्रान्त्वा धना-

णत्वाद्वा ङीप् । गुणस्तु न गां कुटेति ङित्त्वात् । द्वितीये तु कृ॰गृशृपृकुटिभिदिछिदिभ्यश्चेति यन्ताच्छेदनार्थकचुरादिकुटेः शकटीतिवत्कृदिकारादक्तिन इति ङीप् । पञ्चवटीत्यस्य तु पञ्चानां वटानां समाहारः पञ्चवटी द्विगोरिति ङीप् । यद्वा । वटयति विभाजयति जीवानिति वटी पूर्ववत् ङीप् । पञ्चत्यात्मानं व्यक्तीकरोतीति पञ्चा पचाद्यजन्ताट्टाप् । सा चासौ वटी पञ्चवटी पञ्चानां व्यक्तानां बलैश्वर्यादिभिः प्रसिद्धानां वटी विभाजनकर्त्रीति वा । अमुमेवार्थं कविः स्वयमेव विवृणोति यत्रास्ति पञ्चावटीति । यत्र यस्यां विभाजयित्री शक्तिः पञ्चा व्यक्तेति ह्यस्यार्थः । यद्वा । वटस्येयं वटी वटसम्बन्धिनी छायेत्यर्थः। पुंयोगेति ङीप्। नहि तत्र पुंयोगशब्देन दाम्पत्यसम्बन्धस्यैव ग्रहणमित्याग्रहः अत एव केकयीत्यादि सिद्धमित्यभियुक्ताः।पञ्चा विस्तृता यत्र वटसम्बन्धिनी छायास्तीत्यर्थः।अस्मिन्पक्षे पचि विस्तारवचन इत्यस्मातपचाद्यजन्ताट्टाप् अत एव पान्थस्यैकघटी द्वयोरेकमेव घटयतीति एकघटी स्त्रीपुरुषयोर्वियोगकर्त्री ननु यद्येवं सा तर्हि कथं सपत्नीका मुनिगणास्तत्र वसन्तीत्यत आह पान्थस्येति । एवं च प्रायेण पान्थसम्बन्धिन्येकघाटिकेति तदर्थः। पुनः किम्भूता पुरस्कृततटी पुरस्कृत अग्रेकृतस्तट उच्छ्रायो वियोगकरण उत्साहो यया सा अत एव संश्लेषभित्तौ वटी संश्लेषः स्त्रीपुरुषकर्तृकालिङ्गनरूपोऽङ्गसम्ब-

न्धस्तस्य या भित्तिः राशिविशेषस्तस्य वटी तन्निवर्त्तकौषध-गुटिकेत्यर्थः । यद्वा । संश्लेषस्य भित्तिरिव या भित्तिरावरण-कर्त्री तत्साधनं वा तस्यां वटी परिभाषिकेत्यर्थः । अस्मिन्पक्षे घटादेर्वट परिभाषणे इत्यस्मात्पचाद्यच् ततो ङीप् अत एव गोदा यत्र नटी यत्र गोदा नदी स्ववल्लभसिन्धुसङ्गमाभिया नटी नर्त्तकीव नृत्यतीति भावः। कथम्भूता गोदा तरङ्गिततटी तरङ्गितौ तटौ यस्याः सा पुनः किम्भूता कल्लोलचञ्चत्पुटी नृत्यसमये तदनुकूलव्यापारावेशेन कल्लोलैस्तरङ्गैश्चञ्चच्छोभितं तटं पुटति संश्लिष्यतीति कल्लोलचञ्चत्पुटी । यद्वा । कल्लोलैश्च-ञ्चन्त उद्गच्छन्तः पुटा मुनिजनश्राद्धभोजनाद्युपयोगिपलाशप-त्रादिनिर्म्मिताः पात्रविशेषा यस्यां सा। अथवा तरङ्गिततटी-त्याद्युक्तविशेषणद्वयं पञ्चवटीविशेषणमर्थस्तु गोदासम्बन्धित-रङ्गयुक्तास्तटाः समीपप्रदेशा यस्याः सा द्वितीयस्य तु गोदा-तरङ्गैश्चञ्चच्छोभितः पुटः संश्लेषो यस्या सा कल्लोलचञ्चत्तटं पुटति संश्लिष्यतीति पूर्वोक्त एवार्थो वा एतद्विशेषणद्वयेन गो-दापञ्चवट्योरतीव नैकट्यं ध्वन्यते । पुनः कीदृशी पञ्चवटी दिव्यामोदकुटी दिव्यस्यात्युत्तमस्यामोदस्य गन्धविशेषस्य कुटी आकरस्थानभूता तत्प्रदेशस्यानेकविधपुष्पतरुपरिवृतत्वा-दिति भावः । यद्वा । दिव्यस्यामोदस्य स्त्रीपुरुषसंयोगजनित-शृङ्गाररसरूपगन्धस्य कुटी विच्छेदनकर्त्री कुटीति छेदनार्थ-

# भक्तमनोरञ्जनी ।

**शिव पाहि मामनिशं शरण्य तवाङ्घ्रिमूलमितम् ।**
**भववारिधौ पतितं प्रदर्शय पादपोतमलम् ॥ १ ॥**

श्रीगुरुचरणसरोजं वन्देऽभीष्टार्थलाभार्थम् । मनसा चिन्तितमात्राः सिद्धयन्त्यर्था यदीयचिन्तनतः ॥ १ ॥ यदजनि भट्टाचार्य्याद्धीमदयोध्याप्रसादशर्म्माख्यात् । श्रीमच्छम्भुस्तोत्रं विशदीकरवाणि लघुवृत्त्या ॥ २ ॥ अथ कविः स्वेष्टदेवतास्मरणरूपं मङ्गलं ग्रन्थादावाचरति । शिवेति । तत्र, श्वः श्रेयसं शिवं भद्रम् इति कोशात् शिवमद्वैतं ब्रह्मेति श्रुतेश्च शिवशब्दस्य कल्याणवाचकत्वात्परब्रह्मवाचकत्वाच्च मङ्गलार्थकत्वं स्पष्टमेव । किञ्च पाहीति कथनेनाशीर्वादात्मकमपि मङ्गलं सूचयति । अक्षरा[illegible]तु हे शिव हे कल्याणरूप हे शरण्य आश्रयितुं योग्यं माम् अनिशं निरन्तरं पाहि रक्ष । किंभूतं मां तवांघ्रिमूलमितं तव चरणसमीपं प्राप्तम् अनेन रक्षणयोग्यता सूचिता । ननु किं तव दुःखं कश्च रक्षणोपाय इत्यपेक्षायां हेतुगर्भविशेषणपूर्वकमुपायमाह । भवेत्यादिना । संबन्धस्तु भववारिधौ पतितं माम् अलं तारणसमर्थं पादपोतं चरणरूपां नौकां प्रदर्शयेति जन्ममरणादिदुःखनिधिपतितस्य मम तव चरणरूपनौकोपलब्धिरेव रक्षणोपाय इति भावः ॥ १ ॥

**जगदीश जागरितं जगत्कुरु कौशले सततम् ।**
**शतधा विभिन्नदृशा ममाहमिति भ्रमं गमितम्२**

एवं स्वोद्धारे प्रार्थिते दयालुतयान्येषामप्युद्धारं प्रार्थयते । जगदीशेति । हे जगदीश जगत्स्वामिन् सततं निरंतरं कौशले पुण्यकर्मणि जागरितम् उद्युक्तं जगत्कुरु । किंभूतं शतधा विभिन्नदृशा भेदज्ञानेन निमित्तभूतेन ममाहमिति प्रकारेण ॱॱयं गमितं भ्रमं प्राप्तं स्वार्थे णिच् । यद्वा । प्रयोज्यकर्त्र्या दृशा भ्रमं गमितं प्रापितमित्यर्थः ॥ २ ॥

**अव माययाजितया जितं जनमीश लुप्तविदम्।**
**सुतदारदेहनिवासवित्तसुहृद्विषक्तहृदम् ॥ ३ ॥**

ननु स्वयमेव सुखजनके पुण्ये जगत्प्रवर्त्तेत किं मत्प्रवर्तनेनेत्याह । अवेति । हे ईश प्रकृतिप्रवर्त्तक अजितया तव मायया जितम् अभिभूतम् अत एव लुप्तविदं लुप्तविवेकं जनं त्वमव रक्ष । किंभूतम् । लुप्तविवेकादेव सुतदारदेहनिवासवित्तसुहृद्विषक्तहृदं सुखबुद्ध्या सुतादिष्वासक्तहृदयमित्यर्थः । अतो मायापिहितदृष्टिमशक्तं जनं त्वमेव प्रवर्त्तयेति भावः । तथा च श्रुतिः, अनीशया शोचति मुह्यमानः । इति ॥ ३ ॥

**भव यावदेव तवांघ्रिचिन्तनतो जगद्विमुखम् ।**
**न हि तावदस्ति शिवं शतं तु यजीत नाथ मखम्४**

शारूपदुर्जरः । पाशोनुभूतो ह्यपरो गर्वाख्योऽबुद्धिलेशतः ॥ १९ ॥ अतः सुखेप्सुभिः सद्भिर्वन्यैरपि फलाम्बुभिः । वर्त्तितव्यं न धनिनां मुखालोकनजैर्धनैः ॥२०॥ राम राम रम रामया रमारामपादकमलेतरै रसैः । रासनाय कृतिसंघतोमरो नाशकत्कथमलं नरोल्पधीः ॥ २१ ॥ आभिजन्यत इवायितुं क्षमो भूर्वमस्य न निसर्गपद्धतिम् । गोपगोजनुरवान्तरात्मनो लोप्तुमर्हति कथं विचक्षणः ॥ २२ ॥ गोशब्दाश्रयराजेन्दुगोसन्दोहविकाशिनः । तत्वतस्तत्वतो वक्तुं मतिराश्रयते कथम् ॥ २३ ॥ उ विद्धदो निरिहितया सनेशसमीपतः । कथं भवेदिति हितं संप्रधार्य्य मयेरितम् ॥ २४ ॥ यमी वितीर्य्यादिति शब्दशास्त्रजां ख्यातिं बिभर्त्तीह सुसंज्ञया कृता । समाविदृश्याद्वययार्द्रया दृशा समार्चितः श्रीचणकै रसासुरः ॥२५॥ यदा सुजातं सरसीरुहं सती विलोकते या तु वरोपनीतम् । तदाभवल्लोचनपङ्कजश्रियो गन्धेन सादृश्यमधीत्य मोदते ॥ २६ ॥ गारंगारं[1] गारं वारंवारं सुधासारम् । शमयति नैशिकनैशं तं वन्दे त्रातुरपि पालम् ॥ २७ ॥ सुत्वा सूत्वा सूत्वा निगमं तस्मै महादेवम् । उपरत आस्ते कृत्यान्मुनिमीडे रक्षपालं तम् ॥ २८ ॥ मन्दा अपि यद्दयया विद्वद्वरशिरोमणित्वमश्नुवते । यद्वेषात्सुधियोऽपि स्तनन्धयैरपि पराश्यन्ते

१ गारंगारमित्यारभ्य गुवष्टकमिति ज्ञेयम् ।

॥ २९ ॥ सूत्वाध्यात्मदृशं प्रपन्नजनतामानन्दसंदोहितां कुर्वन् दैहिकदैविकादिविविधक्लेशांश्च वंभज्यते । तं कः प्रत्युपकर्त्तुमीष्ट इह तत्पादप्रणामं विना तुष्येत्तत्स्वकृतैरदभ्रकरुणः श्रीकान्तरूपो गुरुः ॥ ३० ॥ वाराणस्यां याम्यदेशेतिरम्ये साङ्गाम्नायाध्येतृभूदेवजुष्टे । लोलार्काख्यस्यान्तिके शास्त्रसांव्याचक्षाणं रक्षपालं नमामि ॥ ३१ ॥ तस्यांघ्रिरेणुरमलः समलङ्करोतु मूढस्य मे म[illegible]मतौघकराभिमृष्टाम् । माधावतो विषयलालसया नितान्तं संसारतापलुलितामिभकालदष्टाम् ॥३२॥ योन्तः प्रयच्छति शिवं हृदि सन्निविष्टःसञ्जीवयन्मम दृगादिचिरप्रसुप्तम्। बिभ्रत्स एव मनुजाकृतिमादिशन्मे शास्त्रीयवर्त्मनि च यं तमहं प्रपद्ये ॥३३॥ योन्तः प्रविश्य नितरां हृदि मामकीने मोहान्धकारपटलं शकलीकरोति । तं नित्यमुक्तसुविशुद्धविवेकरूपमात्मस्थितं निजगुरुं हरिमानतोऽस्मि ॥ ३४ ॥

इति श्रीमद्रुक्मिणीगर्भजबुधतुलारामात्मजत्रिपाठचुमादत्तविरचिता तत्सुतब्रह्मदत्तसंगृहीता कूटपद्यव्याख्या समाप्ता ।

ननु बहवो निगमोदिते यागादिकर्मरूपे पुण्ये प्रवर्तमाना दृश्यन्ते न हि तेषां त्रिविधदुःखापगम इति किं प्रार्थयसे कौशले जागरितं जगत्कुर्वित्यत आह । भवेति । हे भव यावत्पर्यन्तं जगत्तवाङ्घ्रिचिन्तनतो विमुखं पराङ्मुखं स्यात्तावत्पर्यन्तं हे नाथ शतं यथा भवति तथा शतवारानिति यावत् । मखं यज्ञं यजीतापि तथापि तस्य शिवं कल्याणं नैवास्ति । विमुखेन बहिर्दृष्टिना मात्रास्पर्शार्थक्रियमाणान्यपि कर्माणि दुःखहेतव एव जायन्ते । भवदाभिमुख्येनान्तर्मुखेन क्रियमाणानि तु फलानां त्वयि समर्पितत्वाद्दग्धबीजवन्न प्ररोहन्ति किं त्वन्तःकरणशुद्धिद्वारा ज्ञानाविर्भावहेतव एव भवन्तीति भवदाभिमुख्यरूपमेव कौशलं प्रार्थयामीति भावः । तथा च श्रुतिः, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति । असूर्य्या नाम ते लोका अन्धेन तमसा वृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ इति ॥ ४ ॥

**महिपारमम्बुजभूप्रभृत्यमरा न चापुरलम् ।**
**यदनुस्मृतं प्रगतं श्रुतं तव नाथ हन्ति मलम् ५**

न केवलं द्विपदपशोरेव विमुखस्य सुखाभावः किं तु ब्रह्मादयोऽपि वैमुख्यावस्थायां भ्रमन्त एव दृश्यन्ते इत्याह । महिपारमिति । हे नाथ श्रुतं श्रुतिषु पठितं यत्तवानुस्मृतम्

अनुस्मरणं मलं हन्ति तदनुस्मृतं यदि प्रगतं नष्टं भवे-त्तदा अम्बुजभूप्रभृत्यमरा अपि ब्रह्मादयोऽपि देवा अलं प-र्याप्तं महिपारं महिम्नः पारं न आपुः । अन्ये मनुष्या इति किं पुनर्वक्तव्यम् । तथा च तवानुस्मरणमेव पुरुषार्थहेतुरिति भावः ॥ ५ ॥

**हर हृत्सरोजनिविष्टमङ्घ्रिसरोजमिष्टदिशम् ।**
**तव चिन्तया चिरमातनोति शिवं शिवेश भृशम् ६**

अत एवाह । हरेति । हे हर हे शिवेश पार्वतीश इष्टदि-शमिष्टप्रदं हृत्सरोजनिविष्टं भक्तहृदयस्थितं तवाङ्घ्रिसरोजं चिन्तया स्मरणेन चिरं बहुकालिकं भृशमत्यर्थं शिवं कल्याण-मातनोति नतु कर्मकाण्डीयसुखवन्नश्वरमिति भावः ॥ ६ ॥

**जपयोगयज्ञरता यजन्ति जना न यन्ति सुखम् ।**
**भवदीयभावनया विना शिव शुद्धयाधिमखम् ७**

उक्तमेवार्थं दृढीकुर्वन्नाह । जपयोगेति । इदमुपलक्षणं ज्ञानयज्ञव्यतिरिक्तान्येषामपि यज्ञानां हे शिव जपादियज्ञरताः यजन्ति तथापि शुद्धया भवदीयभावनया विना ब्रह्माहमस्मीति भावनया विना अधिमखं सर्वयज्ञफलात्मकं सुखं ब्रह्मानन्दं न यन्ति न प्राप्नुवन्तीत्यर्थः । तथा च श्रुतिः, यो वा एतदक्षरं गार्ग्य विदित्वाऽस्मिल्लोके जुहोति यजते तपस्तप्यते बहूनि

वर्षसहस्राण्यन्तवदेवास्य तद्भवतीति । स्मृतिश्च, श्रेयान्द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः परन्तप । सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ इति । यावानर्थ उदपाने सर्वतः संप्लुतोदके । तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ इति च ॥ ७ ॥

**जगदुद्भवस्थितिसंयमाय धृतं वपुस्त्रितयम् ।**
**त्वयकाजविष्णुमहेशनामकमानता हि वयम् ८**

ननु भवतु परब्रह्मणः शुद्धभावनयोक्तफलं मम किमायातमित्यत आह । जगदुद्भवेति । हे शिव जगत उत्पत्तिस्थितिसंहारार्थं त्वयैव परमेश्वरेण ब्रह्मविष्णुरुद्रात्मकं रूपत्रितयं धृतं तं सर्वात्मकं त्वां वयं समन्तात् नताः स्म इति संबन्धः । एवं चाखण्डरूप एव त्वं मायया विविधरूपेण भासीति भावः ८

**जनपाल भालनिशाधिपाल विशालदृक्त्रय शं ।**
**जगतो विधेहि दयानिधे हितकृन्निधेहि दृशम्॥९॥**

तत्र रुचिवैचित्र्याच्छिवरूपं प्रार्थयन्नाह । जनपालेति । हे जनपाल शरणागतरक्षक हे भालनिशाधिपाल मस्तकधृतचन्द्र हे विशालदृक्त्रय विशालनेत्रत्रय हे दयानिधे हे हितकारिन् जगतः संसारस्य शं सुखं विधेहि । मयि दृशं ज्ञानं निधेहि स्थापय । अनेनैव प्रकारेण विस्मृतनिजरूपेषु सुखं विधातुमुचितमिति भावः ॥ ९ ॥

**जय देव शूलकराद्रिनाथ कपालमाल दृढम् ।**
**गिरिजाधवाक्षफणीन्द्रहार पुनीहि मामघृणम् १०**

पुनरपि तमेव बहु मानयन्नाह । जयेति । हे देव प्रकाशमान हे शूलकर शूलधारिन् हे अद्रिनाथ अद्रिणा हिमवता नाथ्यते प्रार्थ्यते स्वकन्यापरिग्रहार्थमित्यद्रिनाथस्तत्संबुद्धौ । तथा अद्रेः कैलासस्य नाथ इति वा । वस्तुतस्तु अत्ति संहरतीति अद्रिः कालस्तस्य नाथः प्रवर्त्तक इत्येवार्थः । परमेश्वरे जाघटीति दुरतिक्रमत्वसाम्येन लक्षणया कालस्य पर्वतसदृशपरतयाभीष्टसिद्धया तु योगाद्रूढिर्बलीयसीति न विरोधः । हे कपालमाल मुण्डमाल त्वं जय उत्कर्षमाविष्कुरु । ननु केन प्रकारेणोत्कर्ष आविष्कर्त्तव्य इत्यत आह । दृढमित्यादि । हे गिरिजाधव पार्वतीपते यद्वा गिरि तत्त्वमस्यादिमहावाक्यरूपायां वाण्यां जाता आविर्भूता गिरिजा ब्रह्मविद्या तस्याः धवः स्वामी तत्प्रवर्तक इति । हे अक्षफणीन्द्रहार अक्षाणां फणीन्द्राणां च हारस्तत्संबुद्धौ । तथा अघृणं निर्दयं सर्वपापिमौलिभूतं मां दृढं यथा स्यात्तथा पुनीहि पवित्रीकुरु । एवं च मत्पापशोधनरूपेण व्यापारेण उत्कर्षमाविष्कुर्वीति भावः ॥१०॥

**अघवानसाविति यत्त्वया समुपेक्षितोहमहम् ।**
**हर नाम ते किमु सार्थकं न महेश पुण्यवहम् ११॥**

शक्तो जडत्वात् । जडप्रवृत्तिस्तु चेतनाधीनैव बाणप्रवृत्तिवत् तथा च श्रुतिः । एष एव हि साधु कारयति यमूर्द्ध्वंनिनीषति । एष एव ह्यसाधु कारयति यमधो निनीषतीति । स्मृतिश्च, जानामि धर्मं न च मे प्रवृत्तिर्जानामि पापं न च मे निवृत्तिः । केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि ॥ इति । अतस्त्वदधीनैवात्यन्तिकदुःखनिवृत्तिरिति त्वामेव प्रार्थयामीति भावः ॥ १३ ॥

**बहवोघवन्त इतो विभो स्वभ तारिता भवता ।**
**किमुपेक्षितोऽहमघी तवास्मि यथा स्वकानवता १४**

ननु भवतु जडानां प्रकृतिगुणानां प्रवृत्तिर्मदधीना जीवस्तु चेतनो मत्सम एव स च स्वतः प्रवर्त्तताम् । किं मदधीनतया अवस्थानेनेत्यत आह । बहव इति । हे स्वभ स्वेनैव भातीति स्वभस्तत्संबुद्धौ स्वभ स्वयंप्रकाश हे विभो व्यापक बहवोऽविद्यावन्तो जीवा इतः अविद्याकार्य्याद्भवता तारिताः स्वस्वरूपबोधनेन स्वसाम्यं नीताः अहमघी अविद्याकलुषयुक्तः स्वकान् भक्तानवता रक्षता त्वया किमित्युपेक्षितः । ननु कल्पवृक्षस्वभावस्य मम भक्तानुद्धरतोऽपि तवानुद्धारे कः परितापोऽत आह । तवास्मीति । अहमपि तवास्मि त्वां प्रपन्नः प्रपन्नस्य चोद्धारः परमदयालोस्तव उचित एव । सकृदेव प्रप-

न्नाथ तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम ॥ इति वाल्मीकीयोक्तेः । जीवस्याविद्यावृतत्वे ईश्वरस्य च तदनावृतत्वेन तद्रक्षकत्वे सहस्रशः प्रमाणानि । तथा च श्रुतिः, द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्यन्योनाभिचाकशीतीति । स्मृतिश्च, तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् । भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ इत्यादि ॥ १४ ॥

**क नु यामि किं करवाणि हाय तवांघ्रिवारिभवम् ।**
**अभिसृत्य यत्तव यंति धाम शरण्य मुक्तजवम् १५**

अतस्त्वत्तोन्यस्य रक्षकस्याभावात्त्वमेव मां पाहीति प्रार्थयन्नाह । क नु यामीति । हायेति कष्टद्योतको निपातः परित्यज्येति शेषः । हे शिव तव अंघ्रिवारिभवं चरणपङ्कजं परित्यज्य हायेति कष्टे क यामि कस्मिन्प्रदेशे गच्छामि किं च करवाणि सर्वत्र तव सत्वादिति भावः । हे शरण्य शरणागतवत्सल यत्तवांघ्रिवारिभवमभिसृत्य आश्रित्य मुक्तजवं स्थिरं तव धाम स्वरूपं यन्ति प्राप्नुवन्तीत्यर्थः । करवै विहायेति पाठे तु अध्याहारं विनापि सुयोजम् ॥ १५ ॥

अवश्यं च मत्पापं शोधनीयमिति भङ्ग्यन्तरेणाह । अघवानसाविति । असावघवानिति हेतोरहङ्काररूपोऽहं यस्त्वया समुपेक्षितो रक्षणदृष्ट्या न लक्षीकृत इति चेत्तर्हि हे महेश पुण्यवहं पुण्यप्रापकं हरेति यत्तव नाम तत्किन्न सार्थकं पापं हरतीति हर इति व्युत्पत्त्या पापकर्मकनाशनकर्तृत्वार्थकं किमु नास्ति अपि त्वस्त्येवेत्युपेक्षा न युक्तेत्यर्थः ॥ ११ ॥

**यदि मां तमोगुणिनं गिरीश नु मन्यसे समलम् ।**
**किमु नागहारकपालमाधरसि त्विदं सकलम् १२॥**

ननु सत्यं मम नाम पापहारकं तत्तु सात्विकानामेव पुनः पापासम्भवात् तामसानां तु क्वचित्पापे नष्टेऽपि आवरकत्वाद्गजस्नानवत्पापसन्ततिर्न निवर्तते इति चेत्तर्हि को वा तव भक्तेः प्रभावः यच्छुद्धानेव तारयति नतु मलिनान् किंच यदि तमोगुणस्तव हेयस्तर्हि किमिति तत्कार्य्यं सर्प्पादि धारयसीत्याह । यदीति । हे गिरीश यदि मां तमोगुणिनं समलं मलिनं नु इति वितर्केण मन्यसे अत एव उपेक्षसे इति चेत्तर्हि किमिति नागहारकपालादिकमिदं सकलं तमोगुणकार्य्यं धरसि तस्माद् गुणानभिभूतस्य तमोगुणो न दोषावहोऽतः तामसस्यापि ममोद्धारस्तव कृपादृष्ट्येषत्करः । नहि सूर्यस्य जगदान्ध्यनाशने आयासः । यद्वायमर्थः । हे गिरीश यदि मां तमोगुणिनं समलं मलिनमेव मन्यसे तर्हि लीलया भासमात्रेण तमोगुण-

कार्य्यचिताभस्मसर्पमुण्डमालाद्युपकरणप्रियत्वेन विख्यातस्त्वं किमिति नागहारकपालादिकमिदं सकलं पृथग्भूतं नानासाधनजातं धरसि मामेव कथं न धरसि मय्यतिमलिने तमोगुणाक्रान्ते धृते तु इदं सर्वं धृतं स्यादिति भावः। अनेनाखण्डब्रह्मानन्दैकरसशिवाङ्गसंगमेन स्वाभिमतस्यार्थस्यानायासेनोपलब्धिरिति कवेः परमाकूतम् ॥ १२ ॥

**यदि मन्यसे प्रकृतेर्गुणैरदतादयं स्वकृतम् ।**
**तदनुप्रवेशनमेषु भो किमु देव तेन कृतम् ॥१३॥**

ननु प्रकृतिगुणजनितं दुःखं कण्टकेनैव कण्टकमिति न्यायेन प्रकृतिगुणैरेव निवर्त्स्यति तथा च रजस्तो जनितं दुःखं सत्वगुणेन निवर्त्स्यति । यद्वा । बहिर्मुखैरिन्द्रियरूपैः प्रकृतिगुणैर्जनितं दुःखमन्तर्मुखैस्तैरेव निवर्त्स्यति किमिति वारं वारं तन्निवृत्त्यर्थं मां प्रार्थयतीति चेत्तत्राह । यदि मन्यस इति । यदि प्रकृतेर्गुणैर्जनितं संसारबन्धनादि प्रकृतिगुणैरेवायं जीवो रदतात् छिन्द्यात् इति त्वं मन्यसे तर्हि हे देव सर्वशक्तिप्रकाशक एषु प्रकृतिगुणेषु त्वया अनुप्रवेशनं किं न कृतम् अपि तु कृतमेव । तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः ।एवं च यन्त्राधीनाश्वगतिवत्त्वयान्तर्यामिणा प्रेरिता एव गुणाः स्वकार्य्यजनने समर्थाः न च त्वां विना कश्चिदपि गुणः किञ्चिदपि कर्त्तुं

द्धो जनः यदि गमकः विनाशशीलः अतो भवानेवोक्तप्रकारेण जनकत्वेन निरीक्ष्यते इत्यर्थः ॥ १७ ॥

**शरणं व्रजामि शरण्यमीश भवन्तमिष्टदिशम् ।**
**परिपाहि मामघिनं विशस्यमनेहसातिभृशम् ॥१८॥**

परमार्थतः स्वस्मिन्पितृशब्दार्थपर्य्यालोचनया पुत्रवत्त्वयैव रक्षणीय इत्युक्तमिदानीन्तु समर्थस्य तव शरणागतस्योपेक्षा न युक्तेत्याह । शरणं व्रजामीति । हे ईश सर्वनियन्तः शरण्यं रक्षणसमर्थमाश्रयणीयम् इष्टदिशं भक्तकामपूरं भवन्तमहं शरणं व्रजामि अतः कारणात् अघिनं पापिनमविद्याकार्य्यविषयसेविनम् अत एव अनेहसा कालेन अतिभृशम् अत्यन्तं विशस्यं हिंसनीयम् । न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् । अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ॥ इति यजुर्वेदीयकठश्रुतेः । एतादृशं मां परिपाहि सर्वतो रक्षेत्यर्थः । यतस्त्वन्माहात्म्यज्ञानपूर्वकमेव त्वां शरणं गतोऽतस्त्वयैव रक्षणीय इति भावः ॥ १८ ॥

**भवबन्धनच्छिदमंघ्रिवारिजमानतो भवते ।**
**शिरसासुरादिभिरीडितं सकलेशभक्तपते ॥१९॥**

तदेवमनन्यशरणत्वादवश्यमेवाहं त्वया रक्षणीय इति निश्चयौत्सुक्येन तदङ्घ्रिं प्रणमति । भवबन्धनच्छिदेति । हे भव

हे सकलेश सर्वप्रवर्त्तक अन्तर्यामिन् हे भक्तपते भवबन्धनच्छिदं संसारबन्धननिवर्तकं तवाङ्घ्रिवारिजं चरणकमलमहं शिरसा आनतोऽस्मीति संबन्धः किंभूतं। सुरादिभिरीडितं सुरासुरगन्धर्वपन्नगनरादिभिरखिलप्राणिजातैरीडितं स्तुतमित्यर्थः। सकलेशत्वाद्यथाधिकारं तत्तद्रूपेण त्वमेव सर्वोपास्य इति भावः ॥ १९ ॥

**करुणेक्षणेन निरीक्षणीय उमाधवाहमघी ।**
**न हि विस्मरस्व महेश मामखिलाघहन्ननघी॥२०॥**

एवमनेकजन्मोपार्जितसुकृतवशात्सत्वोद्रेकेण सर्वोत्कृष्टभगवन्माहात्म्यज्ञानपूर्वकसर्वकामपूरकतदङ्घ्रिनमनप्राप्तावपि कदाचिद्दुरितवशात्तदभावशङ्कया तद्विरहमसहमानो दुरितनिवृत्तिमेव प्रकारान्तरेण पुनः प्रार्थयन्नाह । करुणेक्षणेति । हे उमाधव हे पार्वतीपते यद्वा ब्रह्मविद्यापते यतोऽहमघी अन्तःकरणशुद्धिराहित्यात्त्वां सततं सेवितुं साक्षात्कर्त्तुं वाऽसमर्थः अतस्त्वया तन्निवृत्तये करुणेक्षणेन दयादृष्ट्या निरीक्षणीयः त्वद्दृष्ट्याऽविद्यानिवृत्तिः सुलभा नान्यैरुपायैरिति भावः । ननु ममापि का शक्तिः किमर्थमहं तन्निवृत्तिं करोमीत्यत आह । हे महेश हे अखिलाघहन् यतस्त्वमनघी अविद्यारहितोऽतस्त्वं मां न हि विस्मरस्व अयमपि मम भक्तोऽस्तीति विचिन्त्य विमुखवन्न विस्मरेत्यर्थः । अयं भावः। महेशत्वात्सर्वज्ञत्वात् अन-

शिव नान्यमत्र भवन्तमीश विनात्मनो जनकम् ।
अवलोकयामि जनाश्रयं शरणं व्रजामि तु कम् १६

उक्तमेवार्थं वृत्तद्वयेन विशदीकरोति । शिवेति । पितरीति च । हे शिव हे ईश अत्र अस्मिन् संसारे भवन्तं विना आत्मनो जनकं नावलोकयामि । प्रजनश्चास्मि कन्दर्प्प इति भगवद्गीतोक्तेः । कर्मणो जडत्वात्पित्रादीनां परतन्त्रत्वादिति भावः। अतः कारणात्त्वदन्यं कं जनाश्रयं भक्तजनाश्रयं शरणं व्रजामीति त्वमेव कथयेति संबन्धः । लभते च ततः कामान् मयैव विहितान् हि तान् । इति भगवदुक्तेरन्यदेवताभक्तानामपि कर्मफलस्य त्वयैव निर्मितत्वादिति तुशब्देन ध्वनितम् । ननु भगवद्गीतायां कृष्णोक्तिः कथं शिवपरतया योज्यत इति चेद्व्याहतमेतत् । विष्णुशिवयोरभेदस्य श्रुतिसिद्धत्वात् । तथा च श्रुतयः, अदृष्टमव्यवहार्य्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेय इति तावदथर्ववेदीयमाण्डूक्यश्रुतिः शिवशब्दार्थं परमात्मैवेत्याह । यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥ इति । अथर्ववेदीयमुण्डकश्रुतिरीशशब्दवाच्यं परमात्मानमेवाह । सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम् । विश्वं नारायणं देवमक्षरं परमं

प्रभुम्॥विश्वतः परमं नित्यं विश्वं नारायण ५ हरिम् । विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति॥पतिं विश्वस्यात्मेश्वर ५ शाश्वत ५ शिवमच्युतम्।नारायणं महाज्ञेयं विश्वात्मानं परायणम् ॥ इत्यादि कृष्णयजुरारण्यकदशमप्रपाठकश्रुतयश्च । हरिशब्दार्थं परमात्मैवेत्याहुः । नहि परमात्मपदार्थो द्वितीयोऽस्तीत्यभेदमेव गमयन्तीति सुधिय एव विदांकुर्वन्तु । एवं स्थिते विष्णुशिवयोर्भेदं कल्पयतः पाखण्डिनः शिरसि पततु वज्रपातः॥१६॥

**पितरीश पुत्रमिवात्मजं वृणु मामतो जनकः ।**
**जगतीत्थमेव निरीक्ष्यते यदयं जनोगमकः ॥ १७॥**

अत उक्तहेतोः यतः परमार्थतस्त्वमेव आत्मनो मम जनकोऽसि अतः हे पितः हे ईश प्रवर्त्तकलौकिकपुत्रमिव आत्मजं मां वृणु पुत्रदृष्ट्या लौकिकपितेव स्नेहार्द्रदृशा अवलोकयेत्यर्थः । ननु लोके किमिति जनाः प्रसिद्धमेव पितरं पितृत्वेन मन्यन्ते त्वां तु केचिदप्येवं न मन्यन्ते इति चेदनवबोधादेव ते तथा मन्यन्ते। अभिज्ञास्तु प्रसिद्धपित्रादिष्वपि त्वामेवोपासते इत्याह । जगतीत्थमेवेति । यत् यदायं जनः गमकः ज्ञाता चेत्तदा जगति संसारे इत्थमेव मदुक्तप्रकारेणैव निरीक्ष्यते तेनापि दृश्यते भवानेव पितृत्वेन दृश्यते इत्यर्थः । अतो लौकिका जनाः मौर्ख्यादेव भेददृशा तथा पश्यन्तीति भावः । यद्वा । यं प्रसि-

**गुरौ शेते निर्भीकं भवे भावाभावेयम्।**
**मतिः सक्ता युक्तोऽयं तया गच्छत्यन्धेऽस्मिन्॥१॥**

ध्यात्वा गुरुमुमादत्तमज्ञानतिमिरापहम्। गुरावित्यादिपद्यस्य व्याख्यां कर्तुं समारभे॥ १॥ अथ कश्चित्कविः गुरुमरणजशोकाकुलं गुरुपुत्रं ज्ञात्वा शिक्षयतीति सम्बन्धः। कथमित्यपेक्षायामाह। गुराविति। हे यज्ञदत्त। गुरौ शेते सति श्यतीति शः शो तनूकरणेऽस्मात् पचाद्यच्। आदेच उपदेशेऽशितीत्यात्वम्। आतो लोप इटि चेत्यालोपः। इण् गताविंत्यस्मात् गत्यर्थेति कर्त्तरि क्तः। शश्चासौ इतः इति शेतः तस्मिन् शेते गुरौ सूक्ष्मगते सतीत्यर्थः। व्युत्पत्त्या सूक्ष्मस्यैव गमनं सम्भवति नतु स्थूलस्य। तथा च स्थूलशरीरं विहाय सूक्ष्मशरीरेण गुरौ गुरूमादत्ते स्वर्गते सतीति फलितार्थोऽनुसन्धेयः। यद्वा। शे इतः शेतः तस्मिन् शेते सर्वेन्द्रियाणां मनोबुद्धिचित्ताद्यन्तःकरणवृत्तीनामपि व्यवहाराभावे पञ्चीकृतपञ्चभूतानां स्वेन स्वेन कारणेन सहकारणत्वरूपेण व्यज्यमाने सूक्ष्मे पञ्चत्वे गते सतीति भावः। यद्वा। कारणशरीरं विहाय सूक्ष्मे परमात्मनि प्रविष्टे सतीत्यर्थः। अणोरणीयान्नित्यादिश्रुतेः। न हि परमेश्वरैकनिष्ठानां भगवद्भक्तानां पुनर्जन्मादयो भवन्ति। किन्तु तत्कृपया तद्भक्तानां संसारादुद्धार

एव भवतीति भावः। तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्। भवामि न चिरात्पार्थ मय्यावेशितचेतसाम्॥ मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्। नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः॥ मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः। स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्॥ इत्यादिस्मृतेः। अत एव निर्भीकं नित्यानित्यविवेकज्ञानजन्यधैर्यत्यागरूपभयरहितं यथा भवति तथा इयम् एतादृशी मोहरूपा मतिः भवतां बुद्धिः भवे पित्रादिवियोगेन भवतीति भवः तस्मिन् भवे शोके हा सकलशास्त्रप्रमाणपारावारीण हा वैयाकरणमुकुटालंकार हा तात त्वां विना कथमहं जीविष्यामीत्यादिविचारपूर्वकविलपनरूपके शोके सक्ता चेत्तर्ह्ययं तव जीवात्मा तया मोहजन्यशोकोपाधिविशिष्टया बुद्ध्या युक्तः सन् अन्धे अज्ञानरूपेऽस्मिन् दुःखे गच्छति मोहात्मिकया मत्या दुःखमेव प्राप्स्यतीत्यर्थः। नहि शोकमोहाद्यभिभूतचित्तस्य कदापि सुखं भवतीत्यतो नित्यानित्यविवेकज्ञानेन धैर्यमवलम्ब्य मोहात्मिकां मतिं त्यक्त्वा शोको न कर्त्तव्य इति भावः। नासतो विद्यते भावो नाभावो विद्यते सतः। उभयोरपि दृष्टोन्तस्त्वनयोस्तत्वदर्शिभिः॥ अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्। विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति॥ अंतवंत इमे देहा नित्यस्योक्ताः शरी-

धित्वादविद्यारहितत्वाच्चाविद्यानिवर्त्तने समर्थः सकलभक्ताघहन्तृत्वाच्च ममाप्यघं निवर्त्तनीयम् । भक्तत्वाविशेषात् अन्यथा अखिलाघहन्तृत्वं भज्येतेति ॥ २० ॥

**निरुपद्रवाय शिवाय शांतिकराय शं ददते ।**
**अगुणाय संधृतविग्रहाय नमोऽस्तु यज्ञकृते ॥२१॥**

अथ ग्रन्थान्ते नमस्कारात्मकमंगलमाचरन्परावररूपेण भगवन्तं स्तौति। निरुपद्रवायेति। शिवाय परब्रह्मणे नमोऽस्त्विति संबन्धः। किंभूताय निरुपद्रवाय प्रकृतिजनितोपद्रवरहिताय अत एव अगुणाय निर्गुणाय। ननु निर्गुणे नत्यसम्भवोऽतआह। संधृतविग्रहाय भक्तानां सुखं जनयितुमनन्तकल्याणगुणतया साकारतामपि भजत इत्यर्थः। तथा च श्रुतिः। या ते रुद्र शिवा तनूरघोरा पापकाशिनी। तया नस्तन्वा शंतमया गिरिशन्ताभिचाकशीहीति। अत एव शांतिकराय मनोदमनकर्त्रे अत एव भक्तानां शं सुखं ददते विधात्रे इत्यर्थः २१

**रविवंशजक्ष्माधीशराज्यपुरप्रसाद इदम् ।**
**व्यतनोदघघ्नमभीष्टदं शिवसद्म रम्यपदम् ॥२२॥**

अथ काव्यस्य यशोर्थकत्वेन तदर्थं ग्रन्थसमाप्तौ स्वनामोल्लेखनस्याप्यावश्यकत्वेन साक्षात्तदुच्चारणे आत्मनामेत्यादिस्मृतिविरोधाद्भङ्ग्यन्तरेण तदुल्लेखयन् समाप्तौ श्रीरामस्मरणरू-

पमङ्गलमाचरति । रविवंशेति । रविवंशजो यः क्ष्माधीशः पृथिवीपतिः श्रीरामस्तद्राज्यपुरमयोध्या तत्प्रसादः अयोध्याप्रसादनामा कविः इदं स्तोत्रं व्यतनोत् विस्तारितवानिति सम्बन्धः । किम्भूतम् अघघ्नं पापघ्नं पुनः किंभूतम् अभीष्टदम् अभिलषितकामपूरकं पुनः किंभूतं शिवसद्म कल्याणाश्रयम् । यद्वा । शिव एव सद्म आश्रयो यस्य प्रतिपाद्यत्वात्तच्छिवसद्म शिवशब्दवाच्यपरमात्मवस्तुविषयत्वादेतत्स्तोत्रस्य शिवाश्रयत्वमिति भावः । पुनः किंभूतं रम्यपदं शिवनामाङ्कितत्वाद्रम्याणि पदानि यस्मिन् तद्रम्यपदम् । तदुक्तम् । तद्वाग्विसर्गो जनताघविप्लवो यस्मिन् प्रतिश्लोकमबद्धवत्यपि । नामान्यनन्तस्य यशोङ्कितानि यच्छृण्वन्ति गायन्ति गृणन्ति साधवः ॥ इति । किञ्च, पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् । इति भारतोक्तेर्भगवद्विभूतिसूचकपरममङ्गलरूपनामविभूषितस्यैतस्य पाठात्सकलेष्टसिद्धिः ॥ २२ ॥ वस्वग्न्यङ्कशशिप्रमाणकशरद्वृन्दे गते भूपतेः श्रीमद्विक्रमसंज्ञकस्य सुकनद्राज्याच्छरन्निर्मले । ऊर्जे कामतिथौ त्रिपाठिकुलजो धीमानुमादत्तकः शम्भो स्तोत्रविकासिसद्विवरणं कृत्वार्प्पयत्तत्पदे॥ १॥

इति श्रीमद्रुक्मिणीगर्भजबुधतुलारामात्मजत्रिपाठ्युमादत्तविरचिता भक्तमनोरञ्जनी श्रीमदयोध्याप्रसादविरचितशिवस्तोत्रटीका समाप्तिमगमत् ।

भावा भवतीति भवः । पचाद्यच् । भवस्यायं भावः तस्येद-
मित्यण् जन्मसाफल्यरूपः स च सदाचारनिष्ठज्ञानजन्य-
भगवद्भजनाश्रयरूपः तस्य अभावो यस्यां सा तादृशजन्म-
फलस्याऽभावरूपेत्यर्थः । न हि विषयापहृतचेतसां सकामानां
व्यवसायात्मिका बुद्धिः सहसा भगवद्भजनादावुत्पद्यत इति
भावः । नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना । न चा-
भावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ भोगैश्वर्यप्रसक्तानां
तयापहृतचेतसाम्। व्यवसायात्मिका बुद्धिः समाधौ न विधी-
यते ॥ इति स्मृतेः । तस्मात्कुमतिं विहाय गुरुलक्षितशास्त्र-
विचारजन्यज्ञानबलेन शनैः शनैर्धृतिगृहीतया बुद्ध्या विष-
यानुपरस्य श्रीमद्रमारमणचरणस्मरणैकनिष्ठो भव ततः सर्वं
वृजिनं तरिष्यतीत्यलं विस्तरेण । यद्वायमर्थः । हे यज्ञदत्त
गुरौ शेते सूक्ष्मगते सति हरिवत्सत्यभावनया ध्यानमार्गेण
गुरौ सूक्ष्मे अन्तःकरणे गते सतीत्यर्थः । सकलशास्त्रप्रमाण-
पारावारिणे गुरूमादत्ते हृदि स्थिते सतीति फलितोऽर्थः ।
अत एव निर्भीकम् अन्यस्मात्पराजयादिभयरहितं निस्सन्देहं
वा यथा भवति तथेयमेतादृशी गुरुध्यानैकनिष्ठा मतिः भवतां
बुद्धिः भवे संसारे संसारगतविद्वज्जनसभायां वा भवे शास्त्रे
शास्त्रविचारे सक्ता चेत्तत्र गत्वा शास्त्रार्थे वा यत्र कुत्रैकान्त-
स्थलेऽपठितग्रन्थचिन्तने प्रविष्टा चेदित्यर्थः । तर्ह्ययम् तव

जीवात्मा युक्तः सन्। अत्र पक्षे युक्त इति छेदः। गुरुभक्तित्वेन ज्ञानयुक्तः सन्नित्यर्थः। उक्ताऽनुक्ताऽधीताऽनधीतवेदशास्त्रार्थविस्मरणराहितः सन्निति फलितोऽर्थः। तया गुरुध्यानैकनिष्ठया बुद्ध्या अन्धे अज्ञाने वा अज्ञानरूपेऽस्मिन् पराजयमार्गे अगच्छति न गमिष्यतीत्यर्थः। अत्र पक्षे अगच्छतीति छेदः। गुरुभक्तिजन्यज्ञानबलेन जयादय एव भवन्ति पराजयादयस्त्वज्ञानविकारेणैवेति भावः। गुरुभक्तिनिष्ठा मतिस्तु निर्विकारिणीत्याह। कीदृशीयं मतिः। भावाभावा विकारो मानसो भाव इत्यमरः। भावः मनःसम्बन्धिविकारः तस्य अभावो यस्यां सा अभावरूपा तन्नाशकारिणीत्यर्थः। अयं भावः। गुरुप्रसादेनाऽज्ञानोपाधिनिवृत्त्या परमेश्वरैकनिष्ठत्वेनाऽमृतत्वमेव विन्दतीति सर्वमनवद्यम्। अध्यात्मपक्षे त्वयमर्थः। गुरौ शेते सति गुरुशब्देन परमात्मा गृह्यते। गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुः साक्षान्महेश्वरः। गुरुरेव परब्रह्म तस्मै श्रीगुरवे नमः॥ अणोरणीयान्महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम्। तमः क्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः॥ इति श्रुतेः। तथा च गुरौ महति आत्मनि शेते सूक्ष्मगते सति सूक्ष्मे अंतःकरणे हृदि गते सतीत्यर्थः। अहर्निशि निश्चलतया ध्यानेन संप्रज्ञातसमाधिना ध्येयत्वेनोपलक्षिते सतीति फलितोऽर्थः। न च निर्गु-

रिणः । अनाशिनोऽप्रमेयस्य तस्माद्युद्धचस्व भारत ॥ न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः। अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ इत्यादिस्मृतेः । एवं चोक्तज्ञानेनैव शोकातिगो भवति तेन च जन्ममरणरहितोऽपि चेति ध्वन्यते । शोकमोहाभिभूतस्तु जन्ममरणभावमेवापद्यत इति दर्शयन्नाह । कीदृशी मोहात्मिका मतिः भावाभावा भावः सत्ता जन्म अभावः नाशः भावश्च अभावश्च भावाभावौ विद्येते यस्यां सा तथा जन्ममरणरूपेत्यर्थः । जन्ममरणदायिकैवेति भावः । तस्माच्छोकमोहौ त्यक्त्वा शान्तिराश्रयणीयेति दिक् । पक्षान्तरे त्वयमर्थः । हे यज्ञदत्त गुरौ शेते सति साधुत्वं तूक्तमेव। गुरौ सूक्ष्मगते सतीत्यर्थः । स्थूलशरीरं विहाय सूक्ष्मशरीरेण गुरूमादत्ते स्वर्गते सतीति फलितोऽर्थः । अत एव निर्भीकं मन्नियन्ता कोऽपि नास्तीत्यादिविचारेण तर्ज्जनताडननिवारणादिभयरहितं यथा भवति तथा इयम् एतादृशी वक्ष्यमाणलक्षणा मतिः भवतां बुद्धिः भवे संसारे संसारसुखे स्रक्चन्दनवनितादिसङ्गरूपे सक्ता किमित्याक्षेपगर्भितः कवेराशयः प्रतिभाति। शास्त्रावलोकनं विहाय विषयासक्ता किमिति भावः । किमित्यऽस्याध्याहारः । न चार्थान्तरेणेष्टसिद्धेः किं किमध्याहारेणेति वाच्यम् । अध्याहृतस्य किंशब्दस्य भगवद्भक्तिप-

राणां वेदान्तशास्त्रव्यसनिनां बुद्धिः कदापि कुमार्गे न गच्छति भवतां कुविषयासक्ता किमहो पौर्वकालिकं भवदाचरणं सर्वं मिथ्याचाररूपमेवेत्यद्य मया ज्ञातमित्यर्थध्वननेन युक्तत्वात् ध्वनिविशिष्टकाव्यस्योत्तमत्वाच्च । ननु तदासक्ते किं स्यादित्याह । तयेति । तया विषयात्मिकया मत्या अयं तव जीवात्मा अयुक्तः अजितेन्द्रियः सन् अस्मिन् अज्ञानकार्यरूपे अन्धे अन्धतामिस्रे निरये गच्छति वर्त्तमानक्रियायाः भविष्यार्थकत्वेन विपरिणामाद्गमिष्यतीत्यर्थः । यथा अयुक्तः अजितेन्द्रियः कश्चित्पुरुषः अन्धे गच्छति तथा अयं तव जीवात्माऽप्यस्मिन् विषयफलरूपत्वेन दृश्यमाने निरये गमिष्यत्येवेति भावः । अनेकचित्तविभ्रान्ता मोहजालसमावृताः । प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ इति स्मृतेः । यद्यपि केवलस्यात्मनो भोक्तृत्वं नास्ति तथापि बुध्याद्युपाधियुक्तत्वेन तस्य भोक्तृत्वमस्त्येव । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः । इति श्रुतेः। यद्वा। अन्धे अज्ञानरूपेऽस्मिन्संसारे गच्छति वारंवारमिहैव जन्ममरणादिभावं प्राप्स्यतीत्यर्थः । ईश्वरभजनाभावेन जन्ममरणान्न निवर्त्स्यतीति भावः । ननु स्वभावेनैव यथा सकामानां सांसारिककामभोगेषु स्वर्गादिफलविषयेषु च प्रवृत्तिर्जायते तथा भगवद्भजनेऽपि स्यादेवेति चेन्नेत्यत आह । कीदृशीयं मतिः भावा-

त्यक्त्वा मनीषिणः । जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ इति च स्मृतेः। एवं स्थिते परमात्मनिष्ठस्यैव संसारादुद्धारो भवति अतस्त्वमपि तादृशो भव । नहि विषयापहृतचेतसां सकामानामज्ञानां भगवद्भक्तिरहितानां कदाचिदपि गतिर्भवति किन्तु श्रीगुरुचरणैकसेवनलब्धज्ञानिनां निष्कामकर्मकारिणां व्यवसायात्मिकाबुद्धियुक्तानां भगवद्भक्तिपराणामेव भवतीति यथायथं सूक्ष्मबुद्धिभिः तत्वविद्भिरेवाकलनीयम्। तीर्थवल्लभरामेऽस्मिन् नृसिंहस्य वरानने । सुरतिं द्वैतभावं च मनो यज्ञाय तत्पदे ॥ १ ॥ रसवेदाङ्कचन्द्राख्ये व्याख्या यज्ञेन कल्पिता । नरदत्तकराब्जे सा चिरं मधुकरायताम् ॥२॥

इति श्रीवैयाकरणमुकुटालङ्कारत्रिपाठिपण्डितोमादत्तसुतयज्ञदत्तकृता नरसिंहदत्तकृतपद्यव्याख्या याज्ञी समाप्ता ।

---

# नारसिंही।

तीर्थवल्लभरामेऽस्मिन् नृसिंह स्य वरानने।
सुरतिं द्वैतभावं च मनो यज्ञाय तत्पदे॥ १ ॥

कश्चित् कविः नृसिंहावतारस्य विष्णोः स्वात्मकृतवैषम्यं निवेद्य तीर्थवल्लभेत्यादिपद्येन स्तौतीत्याह । हे नृसिंह नः

अस्माकं द्वैतभावम् अज्ञानं चम भक्ष अस्मिन् द्वैतभावे सुरतिं स्य नाशय आननशब्दस्य नित्यसम्बन्धित्वात् नृसिंहशब्द-स्य समीपत्वात् तस्यैवान्वयो युक्त इत्याह। नृसिंहस्य तवानने सुरतिं वर स्वीकुरु। किम्भूते तीर्थवल्लभरामे तीर्थाः प्रयागा-दयो वल्लभाः येषां ते रमन्ते यस्मिन्। यद्वा। तीर्थेषु जला-श्रयेषु ये वल्लभाः पद्मकुमुदादयः तान् रमयतीति तस्मिन् सूर्यचन्द्रतुल्य इति भावः। यद्वा। तीर्थे वस्तुनि तत्वे वल्लभाः ये सनकादयस्तान् रमयतीति तस्मिन् अलमस्यार्थवर्णनेन प्रकृतमनुसरामः। पुनश्च तमेव विष्णुं मत्वा याचयन्नाह। हे यज्ञ विष्णो तत्पदे ब्रह्मपदे पद्यते गम्यते संसारनिवृत्तिर्यस्मि-न्निति ब्रह्मानन्दे पदे घञर्थे कविधानमिति वार्त्तिकादधिकरणे कः। मामय प्रापय प्रार्थनायां लोट्। यज्ञो वै विष्णुः, तत्स-दिति ब्रह्मणो निर्देशः आनन्दो वै ब्रह्मेत्यादिश्रुतेरिति प्रथमः पक्षः॥१॥ यद्वा। कोऽपि पितुः शिष्यं बोधयन्नाह। हे नृसिंहद-त्ताभिधेय नृसिंहपदेन नृसिंहदत्तपदबोधस्तु नामैकदेशो नाम-ग्रहणेन गृह्यते इति वचनात् विनापि प्रत्ययं पूर्वोत्तरपदलोपो वक्तव्य इति भाष्याच्च यज्ञाय यज्ञदत्तार्थं तादर्थ्ये चतुर्थ्येषा तत्पदे गुरोः मातुर्वा पदे चरणे भजेति शेषः। भयलिङ्गभग-पदानि नपुंसके इति लिङ्गानुशासनसूत्रान्नपुंसकत्वम्। पदोऽ-ङ्घ्रिश्चरणोऽस्त्रियामिति कोशाच्चरणपर्यायत्वं च सिद्धम्। गुरो-

णस्य निराकारस्यात्मनः ध्यानासम्भव इति वाच्यम् । निर्गु-णस्यापि ब्रह्मणः परमदयालुत्वेन स्वभक्तानां त्राणाय गर्व-दूरीकरणाय च सगुणत्वेनाविर्भावदर्शनात् । तथा च सामवे-दीयतलवकारोपनिषदि श्रुतयः । ब्रह्म ह देवेभ्यो विजिग्ये । तस्य ह ब्रह्मणो विजये देवा अमहीयन्त । ते हैक्षन्तास्माक-मेवायं विजयोऽस्माकमेवायं महिमेति ॥ १ ॥ तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न व्यजानन्त किमिदं यक्षमिति ॥ २ ॥ तेऽग्निमब्रुवन् जातवेद एतद्विजानीहि । किमेतद्यक्षमिति त-थेति ॥ ३ ॥ तदभ्यद्रवत्तमभ्यवदत् कोऽसीति अग्निर्वाऽहम-स्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ॥ ४ ॥ तस्मिंस्त्वयि किं वीर्यमित्यपीद ँ सर्वं दहेयं यदिदं पृथिव्यामिति ॥ ५ ॥ तस्मै तृणं निदधावेतद्दहेति तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुं सतत एव निववृते नैतदशकं विज्ञातं यदेतद्यक्षमित्यादि बहूक्तमेतेन श्रीरामकृष्णादीनामपीश्वरावतारत्वोपपत्तिः सिद्धे-ति दिक् । प्रकृतमनुसरामः । अत एव निर्भीकं भगवत्कृपया कामक्रोधादिशत्रुभयरहितं यथा भवति तथा इयम् एतादृशी भगवद्ध्यानैकनिष्ठा मतिः भवतां बुद्धिः भवे सर्वधर्माणां भवनं यस्मादिति भवः अर्शाद्यजन्तः तस्मिन् भवे वेदे वेदा-न्तशास्त्रविचारे आत्मतत्वविवेके सक्ता चेत्तर्ह्ययं जीवात्मा युक्तः सन् परमात्मैकनिष्ठः सन् । यदा विनियतं चित्तमात्मन्येवावति-

ष्ठते । निस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ इति स्मृतेः । तया परमात्मैकनिष्ठया बुद्ध्या अन्धे अज्ञानोपाधि-विशिष्टेऽस्मिन् जीवभावे अगच्छाति न गमिष्यतीत्यर्थः । अज्ञानोपाधिनिवृत्त्या ज्ञानाधिष्ठितत्वेन ब्रह्मविद्भूत्वा ब्रह्मभाव-मेवापद्यते इति भावः । ब्रह्मविद्ब्रह्मैव भवतीति श्रुतेः । अत्र पक्षे अगच्छतीति छेदः। यद्वा। अस्मिन् विषयनिष्ठारूपे अन्धे अन्धकाररूपायाम् आत्मतत्वं पश्यतो मुनेर्निशायां गच्छती-त्यर्थः । स्वयमात्मतत्वज्ञो भूत्वा सर्वविषयेषु दर्शनस्पर्शश्रव-णादिव्यापाराभावं प्राप्स्यतीति फलितोऽर्थः । विषयनिष्ठा ब्रह्म-निष्ठस्य रात्रिर्भवतीति भावः । या निशा सर्वभूतानां तस्यां जागर्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः॥ इति स्मृतेः । यथोलूकादीनां रात्रावेव दर्शनं भवति नतु दिवसे तथोन्मीलिताक्षस्यापि ब्रह्मज्ञस्य ब्रह्मण्येव दृष्टिर्भवति नतु विषयेष्विति गूढाकूतम् । न पुनस्तस्य जन्ममरणादयो भवन्तीत्यत आह। कीदृशी परमात्मैकनिष्ठा मतिः भावाभावा भवस्य संसारस्य इमे भावाः जन्ममरणादयः तेषां अभावा अभावरूपा नाशकर्त्रीत्यर्थः । जन्मादीनामभावकरणी आत्म-निष्ठा मतिः मोक्षत्वदायिकेति भावः । एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति । स्थित्वास्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति ॥ इति स्मृतेः । कर्मजं बुद्धियुक्ता हि फलं

विन्युपादाने तत्पदस्य बोधो भवत्येवेति चेत्सत्यम्। तथापि भागवतादिभक्तिप्रतिपादकेषु ग्रन्थेषु, ध्यायेद्देवं समग्रांगं यावन्न च्यवते मनः। तास्मिन् लब्धपदं चित्तं सर्वावयवसंस्थितम्॥ विलक्ष्यैकत्र संयुज्यादङ्गे भगवतो मुनिः। इति बहुशः प्रपञ्चनादनवद्यम्। वस्तुतः पृथक् क्रियान्वयत्वात् शङ्कालेशतोऽपि नास्तीति भावः॥ ४॥ यद्वा। स्वयमेव कविरात्मानं प्रकारान्तरेण शिक्षयन्नाह। हे यज्ञ तीर्थवत् गुरुवत् प्रतिष्ठां लभ आप्नुहि शास्त्रावलोकनमहर्निशं क[illegible]पिति भावः। नच लभेरनुदात्तत्वात्परस्मैपदमयुक्तमिति वाच्य[illegible] वक्षिङोऽङित्करणेनात्मनेपदा नित्यत्वज्ञापनात् रामे रामचन्द्रे सुरतिं भक्तिं वर स्वीकुरु। पुनश्च नृसिंह इति। जीवात्मानमुद्दिश्याह हे नृसिंह जीवात्मन् अस्मिन् रामे द्वैतभावं स्य नाशय किम्भूते रामे आनने ब्रह्मरूपे आनयति मायया जीवयति जनानित्याननं तास्मिन् तत्पदे तस्य रामस्यैव पदे चरणे मनोवृत्तिमय प्रापय स्रक्चन्दनलिप्तवनिताङ्गसुखे मनोवृत्तिपातेनाध्यात्मादितापो न निर्वर्तते अतस्तस्मिन्नेव मनस्सु योजनीयमिति भावः॥ ५॥ यद्वा। पुनरपि जीवात्मानं प्रकारान्तरेण बोधयन्नाह। हे तीर्थवल्लभकः रामे योषिद्वपुषि सुरतिं प्रीतिं कुर्य्यात् न कोपीत्यर्थः। रा दाने राति ददाति विषयसुखमिति रा स्त्री तस्याः आमे आमयति भञ्जयति जनान्स्वलावण्येन यत्तत् योषिद्वपुस्त-

स्मिन् आमे अमरोगे ण्यन्तात्पचाद्यच्। तदुक्तम् वाल्मीकीये, स्वभावस्त्वेष नारीणामेषु लोकेषु दृश्यते। विमुक्तधर्मोश्च-पलास्तीक्ष्णा भेदकराः स्त्रियः॥इति विषयिणः कस्यापदो नागता इति नीतेश्च। न तथास्य भवेद्बन्धः क्लेशो वान्यप्रसङ्गतः। योषित्सङ्गाद्यथा पुंसस्तथा तत्सङ्गिसङ्गतः॥इति ॰ागवताच्चातः हे यज्ञ नृसिंहावतारस्य विष्णोराननें सुरतिं ॰ वर स्वीकुरु। अस्मिन्नानने द्वैतभावं स्य नाशय। ॰ द्वितीयाद्भवतीति श्रुतेः। यद्वा। द्वाभ्यामुमामहेश्वराभ्य ताादिनः प्राप्तो यो गणेशावतारस्तस्य भावः प्रीतिस्तं ॰ कुरु। पुनश्च तत्पदे ब्रह्मपदे मनोवृत्तिमय प्रापय ॥ ६ ॥ ॰ । अन्तःकरणे चतुर्व्यूहोपासनां द्वैतभावपदेन स्वात्मनि भावयन्नाह। हे यज्ञ द्वैतभावं वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धानां भावं जन्मकर्म्मरूपं भजेति सम्बन्धः। ननु द्वैतभावपदेन कथं चतुर्व्यूहानां बोध इत्यत आह। द्वाभ्यां देवकीयशोदाभ्यां पुत्रत्वेनेतः प्राप्त इति द्वैतो वासुदेवावतारः भवति आविरिति भवः पचाद्यच्।भव एव भावः स्वार्थेऽण्।द्वैतश्चासौ भावस्तम्।यद्वा। प्रीतिपर्यायेण भावशब्देन षष्ठीतत्पुरुषः। यद्वा। भावयति उत्पादयति मायया जगदिति भावः।द्वैतश्चासौ भावस्तम् एतेन सर्वजगदुत्पादकत्वं ध्वन्यते।तथा च श्रुतिः, यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्तीति।जन्माद्यस्य यत

राश्रममागत्य मातुः पादस्पर्शनपूर्वकं भजेति भावः । यद्वाऽयं भावः। यद्यपि भवान् लोभाक्रान्तदौर्जन्यशीलस्तथापि, कुपुत्रो जायेत क्वचिदपि कुमाता न भवतीति महदुक्त्या तव शिवमाशासाना माता भवद्दर्शनोत्कण्ठा पत्रप्रेषणेन मां पुनः पुनः प्रेरयत्यतो भवद्भिरवश्यं गन्तव्यमिति । यद्वा । यज्ञाय विष्णवर्थं कर्मप्रापकार्थं तत्पदे ब्रह्मस्वरूपस्य गुरोः पदे चरणे भज तव शं भविष्यतीति भावः। अस्मिन् यज्ञदत्ते द्वैतभावं स्य नाशय अयं तव गुरुस्थानापन्नः गुरुपुत्रश्च गुरुवदिति स्मृतेरिति भावः । किंभूते वरानने वरं शोभनं विद्यया आननं मुखं यस्य तस्मिन् । ननु भवतु कालिदासादिवदिति चेन्नेत्याह । तीर्थवल्लभराम इति। तीर्थे गुरौ ये वल्लभाः प्रियाः छात्राः शास्त्रविचक्षणाः तेषु रमते यस्तस्मिन् पुनश्च तस्मिन्नेव मनस्सु रतिं कुरु गीतार्थनिष्ठेषु प्रीतिं कुर्वाणाः अञ्जस्तरन्तीति गूढाशयः ॥ २ ॥ यद्वा । कविः तीर्थशिष्ये उत्पन्नं द्वैतभावं स्वयमेव दूरीकुर्वन्नात्मानं शिक्षयन् चाह । हे यज्ञ नृसिंहस्य वरानने सुरतिं कुरु छायेव मैत्री खलु सज्जनानामित्याद्युक्तेः। किंभूते वरानने पुनः किम्भूते तीर्थवल्लभरामे तीर्थे गुरौ ये वल्लभाः प्रियाश्छात्रास्ते रमन्ते यस्मिन् पुनश्च अस्मिन् नृसिंहदत्ते द्वैतभावं स्य नाशय त्यज । सज्जनानां द्वैतभावकरणमयुक्तमित्याशयः । तथा चोक्तं स्मृत्यादिषु, शुनि चैव श्वपाके च

पण्डिताः समदर्शिनः ॥ इति स्मृतिः । मातृवत् परदारेषु पर-द्रव्येषु लोष्ठवत् । आत्मवत्सर्वभूतेषु यः पश्यति स पण्डितः॥ इति तच्छब्दवाच्यं सर्वान्तर्यामिणमुद्दिश्याह । हे तत् सर्वान्तर्यामिन् पदे व्यवसिते निश्चिते तत्वे ब्रह्मणि मामय प्रापय। पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु । इत्यमरः ॥ ३ ॥ यद्वा । कविः तीर्थिशिष्यमुद्दिश्य शान्तविग्रहे रामावतारे भगवति भक्तिं वितन्वतः कामाद्याक्रान्तहृदये शान्तिर्भविष्यतीत्यत आह । हे नृसिंह हे तीर्थवल्लभ तीर्थो गुरुरेव वल्लभः अध्यक्षः प्रेरको यस्य एवं चानिशं गुरुशासने रत इति ध्वन्यते । निपातागमयोस्तीर्थमृषिजुष्टे जले गुरौ। इत्यमरः। त्रिष्वध्यक्षेऽपि वल्लभ इति च यद्वा तरति समुद्रं राक्षसकुलं वा यः सः तीर्थः रामचन्द्रः पीतृतुदीति कर्त्तरि थक् । स एव वल्लभः उपास्यत्वेन दयितो यस्य एव च रामोपसेवकं मत्वाह। रामे रामचन्द्रे सुरतिं भक्तिं मनः स्तम्भ स्थिरीकुरु।मनः स्तम्भेऽस्मादामन्त्रणे लोट् । पुनश्चास्मिन् रामविषये द्वैतभावं स्य त्यज । अयं दशरथापत्यं नतु सर्वात्मा इत्येवंरूपो यस्तमिति भावः । किंभूते रामे वरानने वरमाननं मुखं यस्य तस्मिन् उ अपि यज्ञाय कर्मप्रापकार्थं तत्पदे तस्य रामस्य पदे चरणे भज रामचरणपङ्कजस्मरणस्पर्शनध्यानेन शबरी अहल्या गुहादिवद्वृजिनं तारिष्यतीति भावः । ननु राम इत्यवय-

ष्याणां कारणं बन्धमोक्षयोः इत्यभियुक्तेः। यदा मनः कामभोगेषु सक्तं तदा संसारं सृजति। यदा त्वात्मन्यासक्तं तदा मोक्षं सृजति। एवं च मनसो ब्रह्मतुल्यत्वप्रतीतेरिति भावः। मनोब्रह्मेत्युपासीतइत्यादि श्रुतेश्च। यज्ञपदेन गुरोर्विष्णुत्वमाह।ह यज्ञ विष्णो यज्ञो वैविष्णुरिति श्रुतेः। न च गुरोः शिवादिप्रतिपादकं भवदीयोक्तिरेव किं प्रमाणमिति वाच्यम्। गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुरेव महेश्वरः। गुरुः साक्षात्परब्रह्म तस्मै श्रीगुरवे नमः॥ इत्यभियुक्तेः। किञ्चाचार्यवान् हि पुरुषो वेदइति श्रुतेश्च। एवं च यथा तीर्थादिगमने वर्त्मनि वृकखलादयः प्रतिबन्धकास्ते नृसिंहपदवाच्यराजन्यविशेषेण भर्त्सिताः न बाधन्ते। हिंसतीति सिंहः पृषोदरादित्वात्साधुः। नृणां सिंहः नृसिंहस्तेनेत्यर्थः। तथा भगवन्मार्गप्रवर्तनेऽवरोधकाः काममोहादयः शत्रवस्ते नृसिंह इति भगवन्नामोच्चारणेन पलायमानाः नाभिभवन्तीत्यभिप्रेत्य पूर्वं नृसिंहपदोपादानमिति भावः। अयं निष्कृष्टोऽर्थः। सकलशास्त्रार्थतत्वपारावारीणगुरुचरणैकध्याननिष्ठतयाऽन्तःकरणशुद्धिद्वारा कामादिजनितपरदारधनाभिलषितहरिभक्तिरहिताहैतुकीं श्रीमद्रामभक्तिमाधिगम्याध्यात्मादितापजन्यद्वैतभ्रमनिवृत्तिपूर्वकसंसाराब्धिमतरन्नित्यलभतिविस्तरेणेति शिवम्॥ ८॥

इयं व्याख्या पूर्णा शरदमभिगम्य पूर्णां यदस्यां न्यूनं तत्सहजसलिलैः पूर्यताम्। यया तुष्यन् यज्ञो वितरतु मनोऽभि-

रम्यां स मे प्रीतिं रातुं विधुनवशतेऽब्धिषक्के ॥१॥ नरदत्तकृत ह्येषा यज्ञदत्ताय धीमते । तस्याम्बुजकरे रम्ये भ्रमरीव सदा विशेत् ॥ २ ॥

इति श्रीपदवाक्यप्रमाणपारावारीणत्रिपाठिश्रीमदुमादत्तशिष्यनरसिंहदत्तविरचिता यज्ञकृतपद्यव्याख्या नारसिंही समाप्ता ।

---

पुस्तक मिलनेका ठिकाना-
गङ्गाविष्णु श्रीकृष्णदास.
" लक्ष्मीवेंकटेश्वर " छापाखाना
कल्याण-मुंबई.

इति न्यायश्च । स्मृतिरपि, यतः सर्वाणि भूतानि भवन्त्यादियुगागमे । यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये॥इति।सङ्कर्षणपक्षे द्वाभ्यां देवकीरोहिणीभ्यामेतः प्राप्त इति द्वैतः द्वैतश्चासौ भावः द्वैतभावः सङ्कर्षणावतारस्तं भज।प्रद्युम्नपक्षे द्वाभ्यां वैदर्भीमायावतीभ्यां पुत्रत्वेन पतित्वेन च एत इति द्वैतः द्वैतश्चासौ भावः द्वैतभावः प्रद्युम्नावतार इत्यर्थः।पूर्वं रुक्मिण्या पुत्रत्वेनेतः पश्चात्तं शंबराख्यदैत्यः आहृत्य जलेऽक्षिपत्तं मीनो जगार तं च मत्स्यजीवी अग्रहीत्स च शम्बराय न्यवेदयत्स च सूदेभ्यस्ते च महानसं नीत्वा स्वाधिति नावद्यन् । तदा तदुदरे बालं दृष्ट्वा मायावत्यै न्यवेदयन्।तया च पतित्वेन स्वीकृत इति भागवते प्रसिद्धमिति भावः । अनिरुद्धपक्षे द्वाभ्यां रत्यूषाभ्यां पुत्रत्वेन पतित्वेन च एत इति द्वैतः द्वैतश्चासौ भावः द्वैतभावोऽनिरुद्धावतारस्तं भज। पूर्वं प्रद्युम्नपत्न्या रत्या एतः पश्चादूषया च अयं भावः। कदाचिदूषा स्वप्ने अनिरुद्धं दृष्ट्वा मुमोह । तां विलोक्य चित्रालेखाह ।हे सुन्दरि कं मृगयसे? सावदत् स्वप्ने मया योषितां हृदयङ्गमः पुरुषो दृष्टस्तं मृगये ।तदा चित्रलेखा योगबलेन कृष्णपौत्रं ज्ञात्वा द्वारकां योगबलेन गत्वा पर्यङ्के सुप्तमादाय ऊषां प्रति प्रापयामासेत्यपि भागवते प्रसिद्धमिति । नृन्दुष्टनृपव्याजदैत्यान् हिंसंतीति नृसिंहश्चतुर्व्यूहरूपस्तस्यास्मिन् वरानने सुरातिं भक्तिं कुरु । किं भूते वरानने

तीर्थवल्लभरामे तीर्थे सर्वगुरौ ये वल्लभाः प्रियाः नारद्रादयो गोपादयो वा ते रमन्ते यस्मिन् पुनश्च तत्पदे तस्य चतुर्व्यूहलीलावतारस्थाने मनोवृत्तिमय प्रापय । भगवल्लीलावतारस्थाने साधवः परार्थकुशलाः सन्ति तेषां दर्शनालापैर्मनःशुद्ध्यत्यतस्तत्रैव वासो युक्त इत्याशयः॥७॥यद्वा गुरुंप्रार्थयन्नाह । हे तीर्थ गुरो मम द्वैतभावमज्ञानं स्य नाशय । द्वाभ्यां प्रकृतिपुरुषाभ्यामासमन्तात् इतः निर्मितः जन्ममरणादिरूपः संसारस्तं भावयति उत्पादयति यत्तदज्ञानमिति फलितोऽर्थः । अस्मिन् वल्लभरामे वल्लभः सर्वाध्यक्षश्चासौ रामस्तस्मिन् वल्लभरामे सुरतिं देहीति शेषः । वल्लभो दयतेऽध्यक्ष इति कोशान्तरम् । किम्भूते वरानने वरं शोभनमाननं मुखं यस्य तस्मिन् वल्लभवराननाभ्यां रामः सर्वैरवश्यं सेवनीयोऽयमिति सूचितमत आह । तत्पद इति । तत्पदे तस्य रामस्य पदे चरणे वा भक्तिप्रतिपादके स्थाने मामय प्रापय । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते । इत्यादि भगवदुक्तेः । अज्ञानकारणद्वैतप्रपञ्चतज्जन्यमोहान्धकारभ्रमभ्रामितजीवोद्धारकं सृष्टिकर्तृत्वादिरूपं गुरुं विना मायोत्तारकमन्यमलभमानः शिवादिप्रतिपादकं विशेषणत्रयमाह । नृसिंह इत्यादि । नॄन् जीवसमूहान् प्रलयकाले हिंसतीति नृसिंहस्तत्सम्बुद्धौ हे नृसिंह।इत्यनेन गुरोः शिवत्वं प्रतिपादितम् । गुरोः ब्रह्मत्वमाह।हे मनः ब्रह्मन्।मन एव मनु-

| | | | | |
|---|---|---|---|---|
| ५०७ | मध्वविजय .... .... .... | नथु | ०-१२ | ०-२ |
| ५०८ | अश्वधाटी काव्य भा० टी०.... .... | क | ०-४ | ०-॥ |
| ५०९ | राधाविनोद काव्य भाषाटीका .... | क | ०-२ | ०-॥ |
| ५१० | प्रेमलतिका भाषाटीका .... .... | क | ०-२ | ०-॥ |
| ५११ | पञ्चतंत्र भाषाटीका .... .... | क | २-० | ०-४ |

## अलङ्कारग्रंथाः।

| | | | | |
|---|---|---|---|---|
| ५१२ | सुभाषितरत्नाकर .... .... .... | गो | २-० | ०-४ |
| ५१३ | कुवलयानन्दसटीक .... .... .... | २ | १-४ | ०-३ |
| ५१४ | सुभाषितसार भाषाटीका .... .... | क | ०-३ | ०-॥ |
| ५१५ | रसतरङ्गिणी टिप्पणीसाहित.... .... | गो | ०-८ | ०-१ |
| ५१६ | सूक्तावली सुभाषित.... .... .... | क | ०-३ | ०-॥ |
| ५१७ | वाग्भटालंकार .... .... .... | २ | ०-५ | ०-॥ |

## नाटकग्रन्थाः।

| | | | | |
|---|---|---|---|---|
| ५१८ | अभिज्ञानशाकुन्तलनाटक सटीक .... | नि | १-४ | ०-२ |
| ५१९ | हनुमन्नाटक सटीक जिल्द .... .... | क | १-० | ०-२ |
| ५२० | रत्नावलीनाटक मूल साटिप्पण .... | २ | ०-६ | ०-१ |
| ५२१ | रत्नावली भा०टी०(वाक्यरचना मनहरण) | २ | ०-१० | ०-१ |
| ५२२ | सीतावनवास नाटक ( गद्यपद्य ) .... | २ | ०-६ | ०-१ |
| ५२३ | इन्द्रसभा नाटक ( राजा इन्द्रकी सभाका वर्णन रागरागिनियोंमें नाटकाकार ) | २ | ०-४ | ०-॥ |
| ५२४ | अभिमन्युनाटक ( करुणा, वीररसका एक अपूर्वही दृश्य लालाशालिग्रामजीने दर्शायाहै) | २ | ०-१२ | ०-१॥ |
| ५२५ | प्रल्हादनाटक लालाश्रीनिवासदासकृत | क | ०-६ | ०-१ |

५२६ मृत्युसभा नाटक .... .... .... क ०-२ ०-॥
५२७ सांगीत शांकुतला नाटक .... .... * ०-८ ०-१
५२८ माधवानलकामकन्दलानाटक-ऐसाप्रीतिप्रवाही
ग्रन्थ देखनेहीके योग्य है लालाशालिग्रामजी
वैश्यकृत .... .... .... .... २ ०-१२ ०-२
५२९ मोरध्वज नाटक रौद्र वीर सत्यता और भक्ति मार्गी
करुणादि रससे परिपूर्ण लालाशालिग्राम १ ०-८ ०-१
५३० वेणीसंहारनाटक भाषा करुणा हास्य और
शान्ति व रौद्र रससे पूर्ण अत्युत्तम पण्डित
ज्वालाप्रसादजीकृत .... .... .... १ ०-१० ०-१॥
५३१ विवाहिताविलापनाटक भाषा .... क ०-४ ०-॥
५३२ मुछन्दरसभा नाटक .... .... क ०-३ ०-॥
५३३ मरहटा सरदार और रौशनआरा औरंग-
जेबकी पुत्रीका प्रेम .... .... क ०-६ ०-१
५३४ आम्रस्तुति प्रहसन भाषामें .... क ०-२ ०-॥

पुस्तकें मिलनेका ठिकाना-

**गङ्गाविष्णु श्रीकृष्णदास,**

**"लक्ष्मीवेङ्कटेश्वर" छापाखाना,**

**कल्याण-मुंबई.**

## काव्यग्रन्थाः।

| | | | | |
|---|---|---|---|---|
| ४६१ | काव्यमंजरी छपके तयार है. | क .... | १-८ | ०-३ |
| ४६२ | गीतगोविन्द संस्कृतटीका और भाषाटीका | क | १-४ | ०-३ |
| ४६३ | माघकाव्य ( शिशुपालवध ) सटीक संपूर्ण | २ | २-८ | ०-६ |
| ४६४ | किरातार्जुनीयकाव्य सटीक* .... | नि | २-० | ०-४ |
| ४६५ | भर्तृहरिशतकत्रयसंस्कृतटीका और भाषाटीका | क | १-२ | ०-२ |
| ४६६ | ,, तथा रफ् .... | क .... | १-० | ०-२ |
| ४६७ | वैराग्यशतक संस्कृतटीका और भाषाटीका. | क | ०-६ | ०-१॥ |
| ४६८ | भोजप्रबंध भाषाटीका .... | क .... | १-४ | ०-२ |
| ४६९ | भोजप्रबन्धकेवलभाषा ग्लेजकागज | क .... | ०-१२ | ०-१॥ |
| ४७० | भोजप्रबंध मूलमात्र .... .... | क .... | ०-७ | ०-१ |
| ४७१ | रघुवंश मल्लीनाथकृत संजीवनी टीका और टिप्पणी सहित जिल्दबंद ग्लेज | २ .... | १-८ | ०-४ |
| ४७२ | ,, ,, तथा रफ .... | २ .... | १-४ | ०-४ |
| ४७३ | रघुवंशसटीक बारीक अक्षर सादा | क .... | ०-१२ | ०-२ |
| ४७४ | ,, तथा जिल्दबंद | क .... | १-० | ०-२ |
| ४७५ | कुमारसंभव सटीक .... .... | २ .... | १-४ | ०-३ |
| ४७६ | मूर्खशतक भाषाटीका .... | क .... | ०-१ | ०-॥ |
| ४७७ | दशकुमारचरित्र सटीक* .... | नि .... | १-८ | ०-३ |
| ४७९ | गीतगोविन्दमूल .... .... | क .... | ०-३ | ०-॥ |
| ४८० | हितोपदेश भाषाटीका अतिउत्तम | क .... | १-४ | ०-३ |
| ४८१ | हितोपदेश मूल .... .... .... | २ | ०-८ | ०-१ |
| ४८२ | रामकृष्णविलोमकाव्य .... .... | क | ०-४ | ०-॥ |
| ४८३ | कृष्णकर्णामृत .... .... .... | १ | ०-४ | ०-॥ |

| | | | | |
|---|---|---|---|---|
| ४८४ | भामिनीविलास मूल .... .... | १ | ०–४ | ०–॥ |
| ४८५ | ,, भाषाटीका .... | २ | १–० | ०–२ |
| ४८६ | मेघदूतकाव्यसटीक .... .... .... | नि | ०–६ | ०–१ |
| ४८७ | मेघदूत सान्वय भाषाटीका .... | क | ०–८ | ०–१ |
| ४८८ | रघुवंश भाषाटीका पदयोजना तात्पर्यार्थ और सरलार्थसहित .... .... .... | २ | ३–८ | ०–७ |
| ४८९ | पद्यावलीअनेकमहानुभावोंके संग्रहीतश्लोक | १ | ०–८ | ०–१ |
| ४९० | कविरहस्यं सटिप्पणी कं० .... .... | गो | ०–६ | ०–॥ |
| ४९१ | कृष्णामृततरङ्गिका सटीक .... .... | गो | ०–५ | ०–॥ |
| ४९२ | चौरपञ्चाशिका टिप्पणीसहित .... | गो | ०–२ | ०–॥ |
| ४९३ | कलिविडम्बन मूल .... .... .... | गो | ०–२ | ०–॥ |
| ४९४ | कलिविडम्बन भाषाटीकासहित .... | १ | ०–४ | ०–॥ |
| ४९५ | सौन्दर्यलहरी सटिप्पण .... .... | गो | ०–३ | ०–॥ |
| ४९६ | कटाक्षशतक सटिप्पण .... .... | गो | ०–३ | ०–॥ |
| ४९७ | भावशतक सटिप्पण .... .... .... | गो | ०–३ | ०–॥ |
| ४९८ | आर्याशतक सटिप्पण .... .... | गो | ०–२ | ०–॥ |
| ४९९ | कामाक्षीस्तुतिशतक सटिप्पण .... | गो | ०–३ | ०–॥ |
| ५०० | अम्बाष्टक सटिप्पण .... .... .... | गो | ०–२ | ०–॥ |
| ५०१ | प्रशस्तिकाशिका .... .... .... | गो | ०–३ | ०–॥ |
| ५०२ | भक्तिरत्नावली .... .... .... | १ | ०–४ | ०–॥ |
| ५०३ | घटकर्परकाव्य भाषाटीका .. . .... | क | ०–२ | ०–॥ |
| ५०४ | राक्षसकाव्यसंस्कृतटीका ाटीकासहित | २ | ०–२ | ०–॥ |
| ५०५ | शृंगारतिलक भाषाट . सहित .... | २ | ०–४ | ०–॥ |
| ५०६ | शृंगारादिनवरस ।नरूपण भाषाटीका–( शृङ्गार का अतीव चमत्कारी ग्रन्थ ) .... | २ | ०–६ | ०–१ |

अन्वितार्थप्रकाशिकाख्यव्याख्यासहित

# दशमस्कंध.

छपके तैयार है की० ४ रु०

# विष्णुसहस्रनाम.

वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ।
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥ १ ॥

अर्थ—श्रीकृष्णभक्तिमें तत्पर और श्रीकृष्णका आश्रय करनेवाला पुरुष सब पातकोंसे मुक्त हो सनातन ब्रह्मपदको प्राप्त होता है ।

प्रियवर महाशय! अपने यंत्रालयमें विष्णुसहस्रनामकग्रन्थ भगवद्गुणदर्पणाख्य भाष्य, निर्वचन और निरुक्ति इन तीन व्याख्याओंसे सहित छपके तैयार है । इसमें प्रथम व्यासोक्तक्रमसे प्रथमान्तनाम अनन्तर "नमः" पद सहित चतुर्थ्यन्त नाम लिखा है जिससे कि महाशय बिना श्रम सहस्रनमस्कार कर सकते हैं । अनन्तर भगवद्गुणदर्पणाख्य भाष्य और नीचे निर्वचन और निरुक्ति ऐसा क्रम रक्खा है । इन तीनों व्याख्याओंका वर्णन करनेकी कुछ आवश्यकता नहीं है। क्योंकि सूज्ञ महाशय व्याख्याओंके नामसेही भलीभांति समझ सकते हैं । परन्तु इतना कहना अवश्य है कि यह ग्रंथ

वैयाकरणोंके लिये केवल आदर्शही बना है। क्योंकि सब नाम प्रकृति प्रत्ययोंसे सिद्ध किये हैं। और लक्ष्मीवेंकटेश्वर यंत्रालयमें छपे हुए कौमुदीके अनुसार धात्वादिकोंके पृष्ठांक लेखे गये हैं। पुस्तक ग्लेज कागद और सुवाच्य अक्षरोंमें छपा है जिससे वृद्ध पुरुष भी पठन कर सकते हैं। सूज्ञ महाशय इससे अनुपम लाभ उठावें और अपने आत्माको ईश्वर गुणानुवादसे कृतार्थकरें इसलिये हमने इसका मूल्य केवल५ रुपया रक्खा है। सूज्ञ महाशय ऐसी अमूल्य संधि न गमावें। त्वरा करिये पुस्तक संग्रहणीय है। ग्रन्थ संख्या १२००० है।

व्युत्पत्तिसहित शङ्कराचार्यभाष्यके अनुकूल हिन्दी भाषामें विष्णुसहस्रनामकी चन्द्रिका टीका छपके तैयार है मूल्य १२आ.

व्युत्पत्तिसहित भगवद्गुणदर्पणाख्यभाष्यके अनुकूल विष्णुसहस्रनामकी दीपिका नामक भाषाटीका छपके तैयार मूल्य १२ आ.

## स्मृतिरत्नाकर.

यह धर्मशास्त्रका ग्रंथ बहुत श्रमसे और खर्चसे संपादित किया है यह एक पुस्तक पास रखनेसे कोईभी धर्मशास्त्रका विषय हो प्रमाणसहित मिल जाता है अर्थात् श्रुति, स्मृति, पुराण आदिसे प्रत्येक विषयके उपयोगी सब प्रमाण वचनोंका संग्रह कर कठिन स्थलपर स्वयं ग्रंथकारने व्याख्यानभी लिखा है इसमें २१४ विषय हैं. यह ग्रंथ इस देशमें सर्वथा अप्रसिद्ध है हालमें छपके तैयार है. कि० २ रु०

अन्वितार्थप्रकाशिकाख्यव्याख्यासहित—

# श्रीमद्भागवत.

यह टीका बूंदी महाराजाश्रित पं० गंगासहायजीने बनाई है. इसमें मल्लिनाथके ढंगपर अन्वयक्रमसे सरल और कठिन सब श्लोकोंका अर्थ सुगम रूपसे लिखा है और टीकामें जिन जिन बातोंका लिखना आवश्यक है वे सब संक्षेप और सुगमतासे लिख दी हैं इसमें श्रीधरजीकी टीकाकी तो प्रायः सब बात आगई और बहुतसी बातें तोषिणीसारार्थसंदर्शिनी आदिसेभी लीगई है और सुगमता अन्वयक्रम और संक्षेपपर पूरी दृष्टि रक्खी गई है इस टीकाके शेषमें भागवतोपयोगी वेदांत सांख्यादिक कितनेक मत सुगम रीतिसे लिख दिये हैं. इसमें किसी मतका पक्षपात अथवा खंडन नहीं किया गया है। सब मतोंके आचार्योंका आदरपूर्वक स्मरण किया गया है. और भागवतके स्कंध और प्रकरणोंका अभिप्राय और श्लोकोंके छन्द तथा अध्यायोंके श्लोकोंकी गणना लिख दी है और भी बहुत बातें हैं. मूलसहित इस टीकाका पाठ सत्तर सहस्र ७०००० के लगभग है. इसका मूल्य अगाऊ रुपया भेजनेवालोंसे डाकव्यय सहित १२ रुपये और छपनेपर डाकव्यय अलग प्रति पुस्तक नियत हुआ है. नमूना मंगालो.

गोविंदराजीय भूषण, तनिश्लोकी, रामानुजी इन
तीनों टीकाओंसहित-

# श्रीमद्वाल्मीकीयरामायण.

महाशयो ! देखो इस अपूर्व भूषणटीकाकी पांडित्यशैली, सुगमता, विचारचातुर्य आदि सब अद्भुत गुण कैसे चमकते हैं. देखो ' भूषण ' यह नामभी कैसा अन्वर्थ रक्खा गया है जिसके श्रवणमात्रसेही कल्पना होती है कि रामायणरूपी भगवान् रामचंद्रजीकी मूर्तिको टीकारूपी अलंकारोंसे अलंकृत किया है और ऐसीही टीकाकारने कल्पना कर रचना की है देखो-कि उक्त भगवान्के बालकांडरूपी पादको टीकारूपी मणिमंजीर (पायजेब), अयोध्याकांडरूपी जघनको पीतांबर, आरण्यकां डरूपी कटिको रत्नमेखला ( कौंदनी ),किष्किंधा-कांडरूपी हृदय और कंठको मुक्ताहार (मोतियोंका कंठा), सुंदरकांडरूपी ललाटको शृंगारतिलक, युद्धकांडरूपी शिरको रत्नकिरीट और उत्तरकांडरूपी ऊपरके भागको मणिमुकुट इस तरह ये गहने अर्पण कर रामायणरूपी भगवान्को सजा-या है. तो इसव्याख्यामें क्या कम है कुछ नहीं फिर लेनेमें क्या हरज है झट लीजिये और इसका पाठ कर अपना जन्म कृतार्थ कीजिये. यह २५ रुपये कीमतका पुस्तक लेनेवालोंको भगवद्गुणदर्पणभाष्य आदि व्याख्यात्रयसमेत विष्णुसहस्रनाम भेंट मिलेगा.

# गीतावलीरामायण भाषाटीका.

हिन्दी पढे लिखे मनुष्योंमे गोस्वामी तुलसीदासकः नाम किसीको अविदित नहीं है, इन महात्माने कितनीही भांतिकी रामायण निर्माण करके कलिमलग्रसित सांसरिक जीवोंका विशेष उपकार किया है, जो लोग संस्कृत नहीं जानते उनके लिये तौ मानो उक्त गोस्वामीजीकी कविता स्वर्गकी नसैनी ( सीढी ) है । सचमुच यह बात प्रत्यक्ष देखी गई है कि, "कलियुग कामधेनु रामायण" येही कारण है तुलसीदासकी कविता आज घर २ विराज रही है । आज हम उन्ही विश्वविख्यातकवीश्वरकी बनाई गीतावली रामायणकी रसभरी भाषाटीका छापके पाठकोंकी भेंट करते हैं । इसका पाठ करनेसे धर्मार्थकाममोक्षकी प्राप्ति सहजहीमें हो जाती है इस ग्रन्थमें रामायणकी सम्पूर्ण कथा चुहचुहाते गीतोंमें वर्णन करी गई है. पद २ की नीचे ठाकुर विहारीलालजीने सरल भाषा लिखकर केलेमें कर्पूर अथवा सुवर्णमें रत्नजटित करनेकी चेष्टा करी है । रामायणकी कथा और तुलसीदासकी मधुर कविता होनेके कारण इसकी उत्तमताकेलिये हमें कुछभी प्रमाण नहीं देना है । यह पुस्तक साधुमहात्मा, गृहस्थी, विरक्त और राजारंक सभीके कामकी है मूल्य २ रु०

पुस्तकें मिलनेका ठिकाना-गंगाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेंकटेश्वर" छापाखाना कल्याण-मुंबई.